BIBLIOTHECA INDICA
A COLLECTION OF ORIENTAL WORKS

# मैत्र्युपनिषत् ।

# THE MAITRI
OR
# MAITRĀYANĪYA UPANISHAD

WITH THE
## COMMENTARY OF RĀMATĪRTHA

EDITED WITH AN ENGLISH TRANSLATION BY
E. B. COWELL, M.A.,
*of Sanskrit in the University of Cambridge*

(Re-Issue)

Number
42
Fasc. 3

Issue Number
1520
New Series




(Concluding Fascicle)

CALCUTTA:
Printed at the Baptist Mission Press
Published by the Asiatic Society of Bengal, 1, Park Street
1935

# NOTICE

# BIBLIOTHECA INDICA

## PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL

The Bibliotheca Indica is a collection of works belonging to or treating of Oriental literatures and contains original text editions as well as translations into English, and also bibliographies, dictionaries, grammars, and studies.

The publication was started in 1849, and consists of an Old and a New Series. The New Series was begun in 1860, and is still running.

The issues in the series consisted originally of fascicles of 96 or 100 pages print, though occasionally numbers were issued of double, triple or larger bulk, and in a few cases even entire works were published under a single issue number. Of single issues are made as much as possible to co volumes. Several different works are always progress. Each issue bears a consecutive is Old Series consists of 265 issues; in the New 1st, 1935, inclusive, 1,515 issues have been pu 1,780 issues represent 254 different works; these represent the following literatures:—

Sanskrit, Prakrit.
Rājasthānī, Kāshmīrī, Hindī.
Tibetan.
Arabic, Persian.

Several works published are partly or wholly sold out, o are still incomplete and in progress. A few works, though in plete, have been discontinued.

Two price-lists concerning the Bibliotheca Indica are avai and may be had on application. One describes the Indian the other the Islamic works published in the series. These are periodically revised.

The standard sizes of the Bibliotheca Indica are three:-

Demy (or small) octavo.
Royal (or large) octavo.
Quarto.

The prices of the Bibliotheca Indica as revised in 1923 a based (with some exceptions) on the following scale per unit 96 or 100 pages in a fascicle as the case may be:—

# मैत्र्युपनिषत्।

## रामतीर्थविरचित दीपिकासहिता।

ॐ ब्रह्मणे नमः

प्रणम्य रामं प्रणताभयप्रदं
गुरूंस्तथा कृष्णमुखांस्तदात्मनः।
मैत्रायणानां श्रुतिमौलिमर्थतः
प्रसाध्य विष्णोः परमे पदेऽर्पये ॥ १ ॥

"ब्रह्मयज्ञो वा एष" इत्याद्या मैत्रायणानामुपनिषत्। तस्याः पूर्वकाण्डेन सम्बन्धः। काण्डचतुष्टयात्मके पूर्वस्मिन् ग्रन्थेऽनेकानि कर्माण्यग्निहोत्रादीनि विहितानि। तानि चोच्चावचफलार्थतया श्रुतानि यद्यपि, तथापि न परमपुरुषार्थपर्यवसितानि, यतः साध्यफलानि तानि. साध्यञ्चानित्यं यत्कृतकं तदनित्यमिति नियमात्। श्रुतिश्चात्र भवति—

'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छान्दो० अ० ८) इति

'यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव' (बृहदा० अ० १। ब्रा० ४) इति च। तथा-

---

गणाधिपतिमस्वल्पविघ्नग्रासं महोदरम्
विपदुत्सारणाभ्यामलम्बीकृतकरं नुमः।
अयं श्लोक आनन्दाश्रमग्रन्थावलीमुद्रितपुस्तकेऽधिको वर्तते।

'यो वा एतदक्षरं गार्ग्यविदित्वास्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति' (बृहदा० अ० ३ । ब्रा० ८) इति च । तस्मात् स्वभावतो नित्यनिरतिशय-पुरुषार्थार्थिनः पुंसोऽभिलषितसाधनोपायप्रदर्शनाय प्रवर्तमानो वेदोऽनादिभवपरम्परानुभूतानेकविषयवासनावासितान्तःकरणं वासनापरवशतया प्रवर्तमानं विषयासक्तमानसं प्रति सहसा विषय प्रवणतापरावर्तने[१] परमपुरुषार्थरूपाविद्यानिवृत्तिपरमानन्दाविर्भावसाधनप्रत्यगात्मतत्त्वब्रह्मप्रवणतामापाद्य परं ब्रह्मात्मतत्त्वं बोधयितुमशक्नुवन्नादौ कर्माण्येव पुरुषार्थसाधनतयोपदिशति, पुनस्तत्रैव निष्ठां सम्पाद्य तन्निष्ठस्य नित्यनैमित्तिककर्मानुष्ठानप्रभावतः शनैः शुद्ध्यमानान्तःकरणस्य पुनरीश्वरार्पणबुद्ध्यैव निष्कामकर्मानुष्ठाना दतितरां शुद्धान्तःकरणस्य नित्यानित्यवस्तुविवेकवत इहामुत्रार्थ-भोगरागशून्यस्य शमदमादिसाधनवतो मोक्षमात्राकाङ्क्षिणोऽधिकारसम्पत्तिमालक्ष्य प्रत्यगात्मतत्त्वं ब्रह्माध्यारोपापवादन्यायेनावगमय्य स्वयञ्च तेनैवावगमेन सह तस्मिन्नेवात्मतत्त्वे ब्रह्मणि विलीयमानो ब्रह्मात्ममात्राद्वयं सत्यज्ञानानन्तानन्दैकरसमवतिष्ठत इति पूर्वापरभावेन कर्मज्ञानकाण्डयोर्हेतुहेतुमद्भावः सम्बन्धः सिद्धः । तदनेन व्याख्येयोत्तरकाण्डस्य विषयप्रयोजनाधिकारिणो दर्शिताः । विषयस्य चात्मतत्त्वस्य वेदान्तापरमानासिद्धतया[२] व्याख्येयग्रन्थप्रतिपाद्यताऽर्थात् सिद्धेति सिद्धानुबन्धचतुष्टयमिमं ग्रन्थं पदशो यथामति व्याख्यास्यामः । पूर्वत्र चयनादिकर्माऽऽम्नातं,

(१) नाऽऽ इव पु० पा० । (२) वेदान्तर इति पु० पा० ।

**ब्रह्मयज्ञो वा एष यत्पूर्वेषां चयनं। तस्माद्यज-मानश्चित्वैतानग्नीनात्मानमभिध्यायेत। स पूर्णः खलु**

———

तच्चाग्निष्टोमातिरिक्तानां सर्वेषां यज्ञक्रतूनां साधारणं, तावता सर्वाण्येव कर्माण्युपलक्षणत्वेन गृहीतानि, तथा च सर्वेषां कर्मणां परमात्मज्ञानजन्मोपकारकत्वेन परमपुरुषार्थहेतुत्वं दर्शयितुं श्रुतिः प्रवर्तते ॥

"ब्रह्मयज्ञो ० चयनं" इति। यदिदं पूर्वेषां कर्मप्रकरणोक्तानां कर्मणां चयनं चयनादि सर्वं कर्म एष ब्रह्मणः परमात्मनो यज्ञो यजनं पूजनं वै प्रसिद्धं, 'यज्ञो वै विष्णुर्यज्ञेनैव यज्ञं सन्तनोति' इति श्रुत्यन्तरात्। अत्र चयनग्रहणमस्यां शाखायां प्रथमकाण्डे चयनस्याख्यानात्। पूर्वञ्च विहितानि सर्वाणि कर्माणि परमेश्वरार्पणबुद्ध्या फलासक्तिं परित्यज्यानुष्ठेयानीति तात्पर्यार्थः। तथा च भगवानाह (गी० अ० ५। श्लो० १०)

"ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा"। इति।

यस्माद्ब्रह्मपूजनार्थमेव सर्वं कर्म "तस्मात् ० ध्यायेत्" इति। यजमानः कर्मण्यधिकृत एतान् पूर्वोक्तानग्नींश्चित्वा अग्निचयनान्तं सर्वं कर्म यथाधिकारं निर्वर्त्य तत्प्रभावलब्धान्तःकरणशुद्धिः सन्नात्मानं प्रत्यञ्चं वक्ष्यमाणलक्षणमभि अभितः सर्वात्मब्रह्म-भावेन ध्यायेत् निरन्तरं चिन्तयेदित्यर्थः। अत्र क्त्वाप्रत्ययनिर्दे-शोऽनुष्ठानात्मध्यानयोर्नैरन्तर्यपरो न भवति, किन्तु पूर्वकालत्व-

**वा श्रद्धाऽविकलः सम्पद्यते यज्ञः । कः सोऽभिध्येयो-ऽयं यः प्राणाख्यः । तस्योपाख्यानं ॥ १ ॥**

मात्रपरः, तथा चास्मिन् जन्मनि जन्मान्तरे वा वृत्तकर्मानुष्ठान-कृतशुद्धतिशयफलं विविदिषां प्राप्य कर्मभ्यो व्युत्थाय प्रत्यक्तत्त्व-ब्रह्मविचारपरो भवेदित्यभिप्रायः । एवं सति किं स्यादित्येतदाह "स पूर्णः ० यज्ञः" इति । स यज्ञः प्रागनुष्ठितः खलु निश्चितं वै प्रसिद्धं श्रद्धा साक्षात् निरुपचरितं पूर्णः पूर्णफलः सम्पद्यते यदा स यज्ञो यजमानः 'यज्ञो वै यजमानः' इति श्रुतेः, पूर्णो-ऽध्यात्मपरिच्छेदाभिमानहान्याऽनवच्छिन्नः परमात्मा सम्पद्यते, श्रद्धा खलु वै इत्युक्तार्थम् । आत्मानमभिध्यायेदित्युक्तं ध्येयमात्मानं प्रश्नप्रतिवचनाभ्यां सङ्क्षेपतो निर्दिशति "कः स ० प्राणाख्यः" इति । स आत्माभिध्येयः पूर्वोक्तः कः किंस्वरूपः किम्प्रमाणक-श्चेति प्रश्नभागार्थः । यः प्राणाख्यः प्राणेन प्राणनेन प्राणनादि-व्यापारेणाख्यायते प्रख्यायतेऽस्तीति निश्चीयते इति प्राणाख्योऽयं स ध्येय आत्मेति प्रतिवचनभागार्थः । तथा च श्रुतिः—

'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तैत्ति० उ०) इति ।

'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' (बृहदा० अ० ३ । ब्रा० ४) इत्याद्या च । यो देहादिसङ्घाताच्चात्मा सोऽभिध्येय इत्यर्थः । उक्तार्थसङ्ग्रहप्रपञ्चनं प्रतिजानीते "तस्यो-पाख्यानं" इति । तस्य प्राणाख्यस्यात्मन उप समीपे आख्यानं तत्स्वभावस्य स्पष्टकथनमारभ्यत इति वाक्यशेषः ॥ १ ॥

बृहद्रथो वै नाम राजा विराज्ये पुत्रं निधापयित्वेदमशाश्वतं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम। स तत्र परमं तप आस्थायादित्यमुदीक्षमाण ऊर्द्ध्वबाहुस्तिष्ठति। अन्ते सहस्रस्य* मुनेरन्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मवि-

बृहद्रथो वा इत्याद्याख्यायिका सुखावबोधार्था तपोवैराग्ययो रात्मज्ञानाङ्गत्वख्यापनार्था च "बृहद्रथो ० निर्जगाम" इति। विविधं राज्यमस्मिन्निति विराज्यं तस्मिन् विराज्ये सार्वभौमे आधिपत्ये इत्यर्थः। निधापयित्वा मन्त्रिभिर्निधानं स्थापनं कारयित्वेत्यर्थः। राज्यक्षेत्रे पुत्रमभिषिच्येति यावत। स्वयं जीवति सति पुत्रस्य राज्यदाने निमित्तमाह, इदमिति। इदं शरीरमशाश्वतमनित्यं मन्यमान इति सम्बन्धः। वैराग्यं राग निवृत्तिं उपेतः ऐहिकामुष्मिकभोगरागविनिर्मुक्त इत्यर्थः। अरण्य ग्राम्यजनवर्जितं विविक्तमभयं देशं प्रति निर्जगाम प्रस्थित इत्यर्थः। "स तत्र ० तिष्ठति" इति। तत्रारण्ये स राजा बृहद्रथनामा परमं दुष्करं कायशोषलक्षणं तप आस्थायोर्द्ध्वबाहूर्द्ध्वीकृतबाहुद्वय आदित्यं सवितारमुदीक्षमाणः सवितर्यारोपितदृष्टिः सन् तिष्ठति अतिष्ठदित्यर्थः। तपसि स्थिरचित्तानामभीष्टसिद्धिरव श्यम्भाविनीत्यभिप्रेत्याह "अन्ते सहस्रस्यान्तिकं ० शाकायन्यः" इति। सहस्रस्य संवत्सराणामिति शेषः। एवं तपसि स्थितस्य राज्ञः

* सहस्राहस्या इति पु॰ पा॰

द्भगवाञ्छाकायन्यः । उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत् । स तस्मै नमः कृत्वोवाच । भगवन्नाहमात्मवित् त्वं तत्त्ववित् शुश्रुमो वयं स त्वं नो ब्रूहीति । एतद्वृत्तं पुरस्ताद्दुःशक्यमेतत्प्रश्नमैक्ष्वाकान्यान्

संवत्सराणां सहस्रस्यान्ते भगवाञ्छाकायन्योऽन्तिकमाजगामेति सम्बन्धः । सहस्राहस्येति पाठे सहस्रदिवसात्मककालस्यान्त इति योज्यम् । शाकायनस्यापत्यं शाकायन्यस्तन्नामा कश्चिदृषिः, तस्याभीष्टवरदानसामर्थ्यद्योतनाय विशेषणानि, अधूमकोऽग्निरिवेति, उपशान्तविक्षेप इत्यर्थः । तेजसा स्वप्रभया ब्रह्मवर्चसेनेति यावत् । निर्दहन्निवान्यानभिभवन्निवेत्यनेनाज्ञानसंशयादिप्रतिबन्धरहितं तत्त्वज्ञानमस्यास्तीति द्योतितम् । कुत एवम्प्रभावोऽयमित्यतो विशिनष्ट्यात्मविदिति । आत्मतत्त्ववित्त्वे लिङ्गमाह, भगवानिति ।

'उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति' ॥

(विष्णु पु० अं० ६ । अ० ५) इति स्मृत्युक्तो भगवच्छब्दार्थः सर्वज्ञ इत्यर्थः । आगत्य किं कृतवानिति तदाह "उत्तिष्ठ० अब्रवीत्" इति । स्पष्टोऽर्थः । ततो राजकृतमाह "स तस्मै ० उवाच" इति । तस्मै शाकायन्याय स राजा नमो नमनं नमस्कारं कृत्वा तं दण्डवत्प्रणम्योवाचोक्तवान् । किमुवाचेति तदाह "भगवन् ० ब्रूहीति" इति । इत्युवाचेति सम्बन्धः । हे भगवन् पूजावन् अहमात्मविन्न आत्मतत्त्वविन्न भवामीत्यर्थः । त्वं तत्त्वविदात्मतत्त्वस्य वेत्ता, इति शब्दोऽत्राध्याहार्यः । इति वयं शुश्रुम विसर्गान्त-

**कामान् वृणीष्वेति शाकायन्यः। शिरसाऽस्य चरणा-वभिमृशमानो राजेमां गाथां जगाद ॥ २ ॥**

---

पाठः छान्दसः । अतः स त्वमात्मतत्त्व नोऽस्मभ्यं ब्रूहि प्रतिपाद-येत्यर्थः । एवं पृष्टवते शाकायन्यः किमाहेत्येतदाह “एतत् ० शाकायन्यः” इति। यत् त्वया पृष्टमात्मतत्त्वमेतद्वस्तु पुरस्तादतीते काले वृत्तं सिद्धं निर्णीतं पूर्वतनैर्ऋषिभिरिति योज्यम् । इदानीं त्वेतत्प्रश्नं दुःशक्यं, लिङ्गव्यत्ययेन एष प्रश्नो दुःशक्यो दुःशक इत्यर्थः । यद्वा एतद्वृत्तमेतस्यात्मतत्त्वस्य वृत्तं याथात्म्यं एतत्प्रश्नं प्रश्नवचनञ्च पुरस्तात् प्रथमं चित्तैकाग्र्यादिति योज्यं, दुःशक्यं दुःशकं वक्तुं श्रोतुं च, दुर्लभमेतदित्यर्थः । तथा च श्रुतिस्मृती—

‘श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः’

(कठोप०) इति ।

‘आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्’

(गी० अ० २ । श्लो० २९) इति । हे ऐक्ष्वाक इक्ष्वाकुकुलोद्भव ! अन्यान् कामान् स्वर्गभोगानप्सरःप्रभृतीनैहिकान् वा धनतरुणी प्रभृतीन् वृणीष्व प्रार्थयेथा इति शाकायन्यः उवाचेत्यनुषङ्गः । ततो राजा वृत्तान्तमाह “शिरसा ० जगाद” इति । इमां बुद्धिस्थां वक्ष्यमाणां गाथां यथास्थितार्थां कथां जगादोक्तवान् राजा, सुगममन्यत् ॥ २ ॥

भगवन्नस्थिचर्मस्नायुमज्जमांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसङ्घाते दुर्गन्धे निःसारेऽस्मिञ्छरीरे किं कामोपभोगैः। कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसम्प्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहते ऽस्मिञ्छरीरे किं कामोपभोगैः ॥ ३ ॥

---

यदुक्तमन्यान् कामान् वृणीष्वेति तत्र भोगायतनस्य स्वभावालोचनायां न कामः कामाय कल्पत इति द्योतयन् स्थूलशरीरं तावत् बीभत्सितं वर्णयति "भगवन् ० भोगैः" इति। श्लेष्मा शिङ्घाणको नामाद्वारकमलः, दूषिका नेत्रमलः, कफो हृत्कण्ठरोधी पिच्छिलो मल इति भेदः। अस्थ्यादिसङ्घाते घने दुःसहगन्धे कदलीस्तम्भवन्निःसारे ऽन्तःसारवर्जिते ऽस्मिन् स्थूले शरीरे वर्तमानस्येति शेषः, किं कामोपभोगैः कार्यं। आघातं नीयमानस्य वध्यस्येव भोजनाच्छादनालङ्करादि न तोषमुपैष्यतीत्यभिप्रायः। न केवलमिदं शरीरं स्वतो बीभत्सितत्वात् कामानर्हमपि त्वतिबलवदरिनिवहैरभिभूयमानत्वादपीत्याह "काम० भोगैः" इति। कामोऽप्राप्ताभिलाषः। क्रोधः प्रसिद्धः। लोभः प्राप्तेष्वपि विषयेष्वलम्बुद्धिराहित्यम्। मोहोऽनर्थे ऽर्थबुद्धिः। भयं परित्रासः। विषादः शोकः। ईर्ष्या परप्रद्वेषः। इष्टवियोगः स्वानुकूलपुत्राद्यनुबन्धवैकल्यम्। अनिष्टसम्प्रयोगः स्वप्रतिकूलानुबन्धसङ्कलनम्। एताभ्यां दुःखं लक्ष्यते। एवमेतेऽन्तःकरणधर्माः।

सर्वं चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादय-स्तृणवनस्पतयोद्भूतप्रध्वंसिनः। अथ किमेतैर्वा परे ऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित्। सुद्युम्नभूरिद्युम्नेन्द्र-

क्षुत्पिपासे प्राणधर्मौ। जरादयो देहधर्मा आगन्तुकाः। शोकः शोकनिमित्तो देहावसादः कार्श्यमिति यावत्। आदिशब्दा-द्वृद्धिविपरिणामौ गृह्येते अन्यदुक्तार्थम्। ३॥

एवंविधोऽपि सङ्घातो यदि चिरस्थायी स्थिरः स्यात् तदा कथञ्चिदपि विषकीटवदभिलष्येत नैवमस्तीत्याह "सर्वं चेदं ० प्रध्वंसिनः" इति। सर्वं चेदं यथा वर्णितं सङ्घातरूपं क्षयशीलं नश्वरं पश्यामो निर्धारयाम इति प्रतिज्ञा, तत्र हेतुरुद्भूत-प्रध्वंसित्वादिति योज्यम्। कादाचित्कत्वादित्यर्थः। यथेमे इत्या-दि प्रध्वंसिन इत्यन्तं निदर्शनमिति विभागः। तथा चायं प्रयोगः. विमतः सङ्घातोऽशाश्वतः उत्पन्नप्रध्वंसित्वाद्य एवं स एवं यथेमे दृश्यमाना दंशमशकादयो यथा वा तृणवनस्पतय उद्भूतप्रध्वंसिनोऽशाश्वतास्तथा चायं तस्मात् तथेति। वनस्पतयो-द्भूतेति सन्धिश्छान्दसः। वोकारो वाऽत्र लुप्तो द्रष्टव्यः। उक्त-दृष्टान्तेष्वप्रकृष्टकर्मजत्वमुपाधिमाशङ्क्य तस्याप्रयोजकतां दर्शयन् प्रकृष्टकर्मजेष्वप्यशाश्वततामाविष्करोति "अथ किमेतैः ० केचित्" इति। अन्यच्चेत्यस्मिन्नर्थे ऽथशब्दः. एतैरुदाहृतैः क्षुद्रजन्तुस्थावरैः किम्। वाशब्दोऽनादरे। परे उत्कृष्टा अन्ये उक्तेभ्यो महाधनु-र्धरा महाशूराश्चक्रवर्तिनः सार्वभौमाश्च केचित् अस्माल्लोकादमुं

द्युम्नकुवलयाश्वयौवनाश्ववध्र्यश्वाश्वपतिः शशबिन्दुर्हरिश्चन्द्रोऽम्बरीष*ननक्तुसर्यातिययात्यनरण्योक्षसेनादयः। अथ †मरुत्तभरतप्रभृतयो राजानः। मिषतो बन्धुवर्गस्य महतीं श्रियं त्यक्त्वाऽस्माल्लोकादमुं लोकं प्रयाता इति। अथ किमेतैर्वा परेऽन्ये गन्धर्वासुरयक्ष-

लोकं प्रयाता इत्युत्तरेणान्वयः। तानेव चक्रवर्तिनः कांश्चिद्गणयति "सुद्युम्नभूरिद्युम्न ० सेनादयः" इति। अत्राश्वपतिः शशबिन्दुरित्यादिपदविच्छेदपाठश्छान्दसः प्रामादिको वा, एते सूर्यसोमवंशजा राजान उक्ताः। एतेष्वपि विशिष्टतरानन्यानुदाहरति "अथ मरुत्त ० राजानः" इति। †मरुत्तो नाम संवर्तकेन योगिना याजितो राजा, यस्य यागे समागता इन्द्रादयः सायुधा एव स्तम्भिताः पुनश्च चमसाध्वर्यवे नियुक्ताः सः भरतो दौष्यन्तिर्येनाश्वमेधानां त्रिंशती कृता सः। प्रभृतिरित्यादिपदपर्यायेण प्रियव्रतादयो गृह्यन्ते। ते किं तदाह "मिषतो बन्धुवर्गस्य ० प्रयाता इति" इति। बन्धुवर्गस्य भोग्यजातस्य मिषतः पश्यतो जीवत एव सतोऽच्युतस्येति यावत्। महतीमपरिमितां, श्रियं विभूतिं, त्यक्त्वा अनिच्छन्तोऽपि तां परित्यज्यास्मात्प्रतिपन्नाल्लोकाद्देहादमुं लोकं परोक्षं प्रयाताः नष्टा बभूवुरिति निश्चितमित्यर्थः। एवं मनुष्यशरीराणामुत्कृष्टानामप्यनित्यतामुदाहृत्यामनुष्येष्वप्युत्कर्ष-

* नघुष इति इण्डरोपीयपुस्तके पठितं।

† मरुंत इति लिखितं किन्तु मरुत्त इति शतपथब्राह्मणे महाभारतीयशान्तिपर्वणि च पठ्यते।

राक्षसभूतगणपिशाचोरगग्रहादीनां निरोधं पश्यामः। अथ किमेतैर्वाऽन्यानां शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचलनं व्रश्चनं वातरज्जूनां निमज्जनं पृथिव्याः स्थानादपसरणं सुराणामित्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैः। यैरेवाश्रितस्या-

---

निकर्षतारतम्येन स्थितेष्वनित्यतामावेदयन्नादौ तेषु निकृष्टाननुक्रमते "अथ किं० पश्यामः" इति। अथापि च एतैः पूर्वोक्तैः किं वा, इतोऽप्यन्ये परे चिरस्थायितयोत्कृष्टाः सन्ति, तेषां गन्धर्वादीनां निरोधं नाशं पश्याम इति योजना। पिशाचा उन्मादापस्मारादयः; ग्रहा बालग्रहा मातृकादयः। अन्ये प्रसिद्धाः। "अथ किं० कामोपभोगैः" इति। अथाप्येतैरुक्तैः किं वा, इतोऽपि स्थिरत्वेन प्रतिपन्नानामन्यानामन्येषामित्येतत् स्थिरतां न पश्याम इति योजना। यतः शोषणं महार्णवानां प्रलयकाले, अर्णानामिति पाठे ऽर्णांस्यर्हन्तीत्यर्णा नद्यः, तासां शोषणं महार्णवानाञ्च शोषणमिति योजनीयम्। शिखरिणां महामेरुप्रभृतीनां गिरीणां प्रपतनमुच्छेदः ध्रुवस्य सर्वज्योतिश्चक्रावलम्बनस्य प्रचलनं खमण्डलात्प्रच्यवनं, वातरज्जूनां वातमयानां रज्जूनां शिशुमारचक्रबन्धनानां व्रश्चनं छेदनं, पृथिव्या अपि सप्तद्वीपवत्या निमज्जनमुदकान्तर्लयः; एवं स्थाननाशे तत्स्थानां सुराणां ब्रह्मादीनां तस्मात् तस्मात्स्थानादपसरणमपसर्पणं स्थानभ्रष्टतया क्षीणभोगत्वं, इतीत्थमेतद्विधे एतादृक्प्रकारे सर्वथा नश्वरेऽस्मिन् ब्रह्मादिस्तम्बपर्यन्ते संसारे किं

सक्तादिहावर्तनं दृश्यता इत्युद्धर्तुमर्हसि। अन्धोदपानस्थो भेक इवाहमस्मिन्संसारे भगवंस्त्वं नो गतिस्त्वं नो गतिः॥ ४॥

इति मैत्र्युपनिषदि प्रथमः प्रपाठकः।

---

कामोपभोगैरिति व्याख्यातम्। भोगस्थानानां भोग्यदेहेन्द्रियविषयाणां तदाश्रितभोक्तॄणां चानित्यत्वं प्रसाध्य भोगानामपि तत्प्रसाधयति "यैरेवाश्रितस्यासकृत्॰दृश्यते" इति। यैराश्रितस्य भोजितस्य ब्रह्मलोकपर्यन्तेषु स्थानेषु तर्पितस्य पुंस इह मनुष्यलोकेऽसकृन्मुहुर्मुहुरावर्तनमावृत्तिर्दृश्यते, तैरनित्यैः कामोपभोगैः किं ममेत्यर्थः। तदनेन प्रबन्धेनानात्मविषयो वरः प्रत्याख्यातोऽनेन चात्मज्ञानयोग्यता दर्शिता। एवं गुरुर्वैराग्यं विवेकपूर्वकमुपवर्ण्य स्थितो गुरोरनुग्रहदृष्टिमालक्ष्य तत्पादोपसर्पणं विद्योपदेशग्रहणाङ्गं विदधद्गुरुं प्रार्थयते "इत्युद्धर्तुमर्हसि" इति। यतोऽहं निर्विण्णोऽस्मि अतो मामुद्धर्तुमर्हसि इत्युक्तवानित्यर्थः। कुत उद्धरणं तदाह "अन्धोदपानस्थो॰गतिः" इति। अन्धोदपानं निरुदकः कूपस्तत्र स्थितो भेको मण्डूक इवास्मिन् यथावर्णिते संसारे स्थितो दुःखसौत्यस्मादुद्धर्तुमर्हसीत्यर्थः। कोऽप्यन्यस्त्वामुद्धरिष्यतीति मा शङ्किष्ठा इत्याह "भगवंस्त्वं नो गतिस्त्वं नो गतिः" इति। अभ्यास आदरार्थः, अध्यायसमाप्तिद्योतनार्थो वा॥ ४॥

इति रामतीर्थविरचितायां मैत्र्युपनिषद्दीपिकायां
प्रथमः प्रपाठकः॥

अथ भगवाञ्छाकायन्यः सुप्रीतस्त्वब्रवीद्राजानम् । महाराज बृहद्रथेक्ष्वाकुवंशध्वज शीघ्रमात्मज्ञः कृतकृ-

---

## अथ द्वितीयः प्रपाठकः ।

एवं वरान्तरैः प्रलोभ्यमानोऽप्यप्रचलिततया सुपरीक्षितो जिज्ञासुरुपसन्नः शिष्यो न गुरुणोपेक्षणीय इति गुरोः प्रवृत्तिं दर्शयति श्रुतिः "अथ भगवान् ० राजानं" इति । स्पष्टोऽर्थः । किमब्रवीदिति तदाह "महाराज बृहद्रथ ० विश्रुतोऽसीति" इति । महाराजेत्यादिशिष्यप्रशंसा वक्ष्यमाणार्थग्रहणयोग्यतां तस्य सूचयितुम् । प्रशस्यमानो हि गुरोः प्रसन्नतां बुद्धा तदुक्तार्थे श्रद्दधानतया तमवधारयति । वंशध्वजत्वं तत्ख्याति-तिकरत्वम् । त्वं शीघ्रमात्मज्ञः संवत्सरवासशुश्रूषादिविलम्बं विना मत्त आत्मज्ञानं प्राप्नोषि यतोऽतः कृतकृत्यस्त्वमिति । इतिशब्दोऽग्रेतन इह ज्ञेयः । इतिहेतोर्मरुन्नाम्ना मरुतो वायो-र्यन्नाम पृषदश्व इति तेन नाम्ना विश्रुतोऽसीति योजना । पृषन्तो महान्तोऽश्वा यस्य रथे भवन्ति स पृषदश्वो वायुः, महाश्वयुक्तरथो हि महान् भवतीति महारथ उच्यते वायुः, अयमपि तत्पर्यायत्वाद्बृहद्रथ इति ख्यातिमापन्न इत्यर्थः । अथवा जगत्प्राण इति यद्वायोर्नाम तेन नाम्नेदानीं विश्रुतो ऽसीति योजना । मत्प्रसादात् त्वं जगदात्मा संवृत्तोऽसीत्यभि-प्रायः । यदर्थमयमुपसन्नो राजा गुरुं तमात्मानमुपदिशति

त्यस्त्वं मरुन्नाम्नेति विश्रुतोऽसीति। अयं वाव खल्वात्मा ते। यः कतमो भगवा इति। तं होवाचेति॥ १॥

अथ य एष उच्छ्वासाविष्टम्भनेनोर्द्ध्वमुत्क्रान्तो व्ययमानोऽव्ययमानस्तमः प्रणुदत्येष आत्मा। इत्याह

---

"अयं वाव खल्वात्मा ते" इति। ते तव अहं ममेति सङ्घातमनुभवतोऽयं वाव अयमेवानुभविताऽऽत्मा खलु नात्र संशयः कार्य इत्यर्थः। कोऽसावनुभवितेति पृच्छति "यः कतमो भगवा इति" इति। यस्त्वयोक्त आत्मा स कतमो भगवा हे भगवः देहेन्द्रियमनोबुद्धिप्राणानां मध्ये किमन्यतमः किं वा तद्विलक्षणोऽन्य इति प्रश्नार्थः। तत्र सङ्घातविलक्षण एवात्मेति गुरुरुत्तरं प्रतिजज्ञे इत्याह श्रुतिः "तं होवाचेति" इति। इतिशब्द ऐतिह्यार्थेऽनुवाकसमाप्त्यर्थे वा॥ १॥

पूर्वमयं वावात्मेति जागरितेऽनुभविता आत्मेति प्रदर्शितं, तेन च स्थूलशरीरादन्यत्वमुक्तं। इदानीं सूक्ष्मस्य प्राणान्तःकरणसङ्घातस्य द्रष्टृत्वशङ्कापाकरणेन ततो विविक्तमात्मानमुपदिशति "अथ य ० आत्मा" इति। अथ जाग्रद्भोगहेतुकर्मोपरमानन्तर स्वप्नभोगोद्भवकाले य एष विद्वत्प्रत्यक्ष उच्छ्वासस्य उच्छ्वासनिश्वासव्यापारवतः प्राणस्याविष्टम्भनेनानिरोधेनोर्द्ध्वमुपरि, स्थूलात्ययं सूक्ष्ममूर्द्ध्वमुपरीति चोच्यते, तत्प्रत्युत्क्रान्तः स्थूलशरीराभिमानं परित्यज्य सूक्ष्मशरीरमभिमन्यमान इत्यर्थः व्ययमानो विविधमयमानो नानावासनावासितान्तःकरणविकारा-

**भगवान् मैत्रिः। इत्येवं ह्याह। अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य**

ननुभवंस्तत्तदात्मना विप्रसृत इव[1]) वभासमानोऽपि परमार्थतोऽव्ययमानो निश्चल एव संस्तमो मोहलक्षण प्रणुदति प्रेरयति, पश्चात् क्रमेण मोहमाविशति जाग्रद्दृष्टं नानुसन्धत्त इत्यर्थः। एष आत्मा यः स्वप्ने करणानामुपरमाद्बाह्यान् विषयाननुभवन् वासनामयांश्चानुभवन् प्राणेन स्थूलं च देहं परिपालयन्नास्ते एष आत्मेत्यर्थः। तथा च श्रुत्यन्तरं

'प्राणेन रक्षन्नवरं कुलायं बहिः कुलायादमृतश्चरित्वा।

स ईयते ऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः'

(बृहदा० अ० ४। ब्रा० ३) इति। उक्ते ऽस्मिन्नात्मनि प्रत्ययदार्ढ्याय वृद्धसम्मतिमाह "इत्याह भगवान् मैत्रिः" इति। मैत्रिर्मित्राया अपत्यमृषिर्मैत्रिर्मैत्रेयः। वृत्तमर्थं श्रुतिः स्वमुखेनाह "इत्येवं ह्याह" इति। शाकायन्य इत्याह भगवान्मैत्रिरित्येवं हि राजानं प्रत्याहेत्यर्थः। येनाहं ममेत्यनभिमन्यमानानामिदं स्थूलं शरीरं निर्व्यापारं पतति तदनु च येन प्रकाशितं प्राणान्तःकरणरूपं लिङ्गं विषयविषय्याकारेण व्याप्रियते स आत्मा तवेत्युक्तं. इदानीमेतस्यापि सूक्ष्मस्य यत्र तमोमात्रेण कारणात्मनि लयो लीनप्रपञ्चस्य यत्स्वभावोऽवतिष्ठते स मुख्य आत्मा साक्षादेव तमात्मेति गृहाणेत्याह "अथ य० ब्रह्मेति" इति। अथ

(१) इव इति पु० पा०।

स्वेन रूपेणाभिनिष्पद्यता इत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ॥ २ ॥

---

स्वप्नदर्शनहेतुकर्मक्षये सति पुनर्जागरनिमित्तकर्मानुद्भवे य एष स्वप्नविषयसाक्षी सम्प्रसादः सम्यक् प्रसीदत्यत्रेति सम्प्रसादः सुषुप्तिः, तदवस्थः आत्मेह सम्प्रसाद उच्यते, स्थूलसूक्ष्मोपाधिद्वयविलापनेन तत्सम्पर्कजनितकालुष्यविलयात् सम्प्रसन्नः सुषुप्तौ पुरुषो भवति। स सम्प्रसादोऽस्मात्पूर्वगृहीताच्छरीराद्देहद्वयात् समुत्थाय सम्यगुत्थाय तद्विस्मृत्य तदभिमानं परित्यज्येति यावत्। परं प्रविलीनप्रपञ्चकारणं ज्योतिः प्रकाशमात्रस्वभावमुपसम्पद्य तदेकात्मभावेन सम्पद्य स्वेनासाधारणेन रूपेणाभिनिष्पद्यते जीवावस्थामप्यभिभूय स्वस्वरूपमुपगतो भवति, एवं क्रमेण येन स्वरूपेणाभिनिष्पद्यते, एष आत्मेति होवाच शाकायन्य इति श्रुतेर्वचनमिदम्। एवंविधात्मस्वरूपज्ञाने सति ज्ञातव्यं नावशिष्यते कर्तव्यं वा प्राप्तव्यं वा किमपीत्याह एतदमृतमभयमेतद्ब्रह्मेति होवाचेति सम्बन्धः। अमृतमविनश्वरमत एवाभयमप्रकम्प्यमेतदेव ब्रह्म परिपूर्णमद्वयानन्दरूपमित्यर्थः। अतस्त्वं कृतकृत्योऽसीत्यभिप्रायः। अस्यानुवाकस्यापरा व्याख्या। पूर्वानुवाके अयं वाव खल्वात्मा त इति सामान्यतोऽनिर्धारितविशेष आत्मोपदिष्टस्तद्विशेषबुभुत्सया यः कतम इति पृष्टे तं विशेषतो वक्तुं प्रतिजज्ञे। तत्राऽऽत्मनो निर्विशेषस्वभावत्वाद्विशेषतो निर्वक्तुमशक्यत्वादुपाध्याकारजनित-

विशेषप्रविलापनेन निर्विशेषमात्मानं दर्शयितुमारभते "अथ य एषोच्छ्वासाविष्टम्भनेन" इत्यादिना । अथ यदि विशेषमात्मनोऽवगन्तुमिच्छसीत्यर्थः, तर्हि शृणु । यस्तुभ्यं मयोक्त एष एव उच्छ्वासाविष्टम्भनेन, ऊर्द्ध्वश्वासो यो मरणकाले भवति स उच्छ्वासस्तस्याऽऽसमन्तात् विष्टम्भनं निरोधः[१], तेन तन्निरोधं कृत्वा देहान्तःसञ्चारिणं प्राणमाश्रित्येत्यर्थः । ऊर्द्ध्वं हृदयात् कण्ठं कण्ठाच्च शिरःपर्यन्तमुत्क्रान्तो विप्रसृतः उपलक्षणमेतत्, अपश्वाससमाविष्टभ्य हृदयादधोऽप्यपक्रान्त आपादतलमस्तकमयःपिण्डमिव सन्तप्तवह्निश्चेतनतामापादयन् व्याप्य व्यवस्थित इत्यर्थः । तत्रैव स्थितस्तत्तदिन्द्रियद्वारकबुद्धिवृत्तिभिर्व्यज्यमानो विविधं शब्दादिविषयाकारेणायमानः प्रवर्त्तमानस्तत्तद्विषयाकारबुद्धिवृत्त्यध्यासेन द्रष्टा श्रोता मन्तेत्याद्यनेकरूपतयाऽऽत्मव्यवहारमनुभवन्निति यावत् । तथापि स्वरूपतस्त्वव्ययमानोऽप्रचलितस्वभावः कूटस्थ इति यावत् । तमो विषयानभिव्यक्तिलक्षणं प्रणुदति अपसारयति विषयेषु स्वचैतन्यकर्मापादयंस्तेषामज्ञातताममपनयतीत्यर्थः । एवं यो व्यवहरन्नेतद्देहमवष्टभ्यास्ते एष आत्मेत्यादि व्याख्यातम् । तथाच मन्त्रवर्णः

'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति ।

एवं सोपाधिमात्मानमुपाधिद्वारोपलक्ष्य तमेव पुनरुपाधिविलापनेन निरुपाधिकं शुद्धमात्मानमुपस्थाप्य तस्य ब्रह्मरूपत्वमुपदेष्टुं प्रवर्तते "अथ य एष सम्प्रसादः" इत्यादिना । व्याख्यानं समानम् ॥२॥

---

(१) विरोधः इति पु० पा० ।

अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रिणाऽऽख्याताऽहं ते कथयिष्यामीति। अथापहतपाप्मानस्तिग्मतेजस ऊर्द्ध्वरेतसो वालखिल्या इति श्रूयन्ते। अथ क्रतुं प्रजा-

---

एवं सङ्क्षेपत आत्मतत्त्वमुपदिशन् शाकायन्यः पुनर्विस्तरेण तस्यात्मनः स्वभावमुपदेष्टुकामः स्वाचार्यद्वारा स्वस्यैतद्विद्याप्राप्तिं दर्शयति। सङ्क्षेपविस्तराभ्यां हि निरूप्यमाणोऽर्थः सुखावबोधो दृढनिश्चयश्चापद्यत इत्यत आह "अथ खलु ० कथयिष्यामीति" इति। अथशब्द उत्तरारम्भार्थः। हे राजन् बृहद्रथ? यदिदमात्मतत्त्वज्ञानं मया तुभ्यमुक्तमियं खलु ब्रह्मविद्या सर्वशाखोपनिषत्प्रतिपाद्या वा विद्या, वाशब्दश्चार्थे, सा चेयमेव नान्याऽस्माकं भगवता मैत्रिणा गुरुणाऽऽख्याता कथिता तामेवाहं कथयिष्यामि, तेन मह्यं येन प्रकारेणोक्तं तेनैव प्रकारेण महदाख्यानेन निरूपयिष्यामीत्यर्थः। अयमाशयः सङ्घातविलक्षणस्तत्साक्ष्यात्मैव ब्रह्मेति यदिदमेतच्छाखाप्रवक्तुर्मैत्रेराचार्यस्य मतं तत्सर्वशाखासम्मतं सर्वब्रह्मवित्सम्मतञ्च न पुनस्तार्किकसमयवत्परस्परविगीतं, अतो दृढविश्वासः कर्त्तव्य इति। किं तत् महतां पूर्ववृत्तमाख्यानं मैत्रिणोक्तमित्यभिमुखीभवन्तं शिष्यं प्रत्याख्यायिकामाह "अथापहत ० श्रूयन्ते" इति। अथेदानीमिदं शृणु किं अप-

**पतिमब्रुवन् । भगवन् शकटमिवाचेतनमिदं शरीरं कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमेतच्चेतनवत् प्रतिष्ठापितं प्रचोदयिता वा अस्य यद् भगवन् वेत्सि तदस्माकं ब्रूहीति तान् होवाचेति ॥ ३ ॥**

हतपाप्मानस्तपोनिर्धूतकल्मषाः तिग्मतेजसस्तीव्रतेजसोऽत्यूर्जित-प्रभावाः तेजसा इत्येवंविध एतच्छाखासङ्केतपाठश्छान्दसः सर्वच । ऊर्द्ध्वरेतसोऽस्खलितब्रह्मचर्या जितेन्द्रिया इति यावत् । वाल-खिल्या वालखिल्यसञ्ज्ञा इत्येवंविधा ऋषयः श्रूयन्ते श्रुतिस्मृति-पुराणेष्वित्यर्थः । किं तत इत्यपेक्षायामाह "अथ क्रतुं॰ अब्रुवन्" इति । अथ कदाचित् ते क्रतुनामानं प्रजापतिं गत्वाऽब्रुवन्नुक्तवन्त इत्यर्थः । किमब्रुवन्निति तदाह "भगवन्॰ होवाचेति" इति । हे भगवन् प्रजापते ! इदं शरीरं सावयवत्वाद्रू-पादिमत्त्वाच्च शकटमिवाऽन इवाचेतनं जडं, एवमपि चेतनावदिव शकटविलक्षणमनुभूयतेऽतः पृच्छामो येनैतद्विधमेतच्छरीरं चेतन-वत्प्रतिष्ठापितं स एष महिमा माहात्म्यं कस्य खल्वतीन्द्रिय-भूतस्यादृश्यस्याग्राह्यस्य सत ईदृश एतादृशः । को वास्य चेतयि-तेति प्रश्नार्थः । किञ्च प्रचोदयिता वास्य शरीरस्य शाकटिक इव शकटस्य प्रेरयिता वा कोऽस्ति । यदत्र चेतयितृत्वेन प्रेरयितृत्वेनानुगतं वेत्सि हे भगवन् ! तदस्माकं ब्रूहीति अब्रुवन्निति

योे ह खलु वावोपरिस्थः श्रूयते गुणेष्विवोर्द्ध्वरेतसः स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्मा-

पूर्व्वेणान्वयः। "तान् होवाच" इति श्रुतिवचनं। तान् प्रति प्रजापतिर्ह उवाचोक्तवानुत्तरमित्यर्थः॥ २॥

"यो ह० वैषोऽप्यस्येति" इति। ह स्फुटं। खलुशब्दो वाक्यालङ्कारार्थः। वावशब्दोऽवधारणे। य एवोपरिस्थः सर्व्वस्य प्रपञ्चस्योपरि निष्प्रपञ्चे स्वरूपेऽवस्थितः। यद्वा वावशब्दो भिन्नक्रमः, यो ह खलु उपरिस्थित एव प्रपञ्चान्तरनुगम्यमानोऽपि न तस्मिन् स्थितः, किन्त्वसङ्गतया प्रपञ्चातीते स्वस्वरूपे स्थित एव सन् स्वचैतन्याभासेन प्रपञ्चमवभासयंस्तत्र स्थित एव भवति न वस्तुतस्तत्रास्ति, तस्य स्वात्मन्यध्यस्तस्य मिथ्यात्वादित्यभिप्रायः। तथा च श्रूयते—

'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व्वं'

इति, श्रुत्यन्तर इत्यर्थः। प्रपञ्चानुगतस्यापि तद्धर्मास्पृष्टत्वेन तत उपरिस्थत्वे दृष्टान्तमाह "गुणेष्विवोर्द्ध्वरेतसः" इति। यथोर्द्ध्वरेतसो योगिनो गुणेषु विषयेषु वर्त्तमाना अपि तत्रासङ्गितया तेभ्य ऊर्द्ध्वा एव तथायमपीत्यर्थः। अथवा यो ह खलु उपरिस्थोऽध्यक्षतया स्थित एव गुणेषु गुणकार्य्येषु देहादिष्विव श्रूयत इति योजना। तथा च श्रुतिः—

'यः सर्व्वेषु भूतेषु तिष्ठन् सर्व्वेभ्यो भूतेभ्योऽन्तरो यं सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं यः सर्व्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' (वृहदा० अ०३ ब्रा०७)

**नन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यजेनेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता**

इति। ऊर्द्ध्वरेतस इति सम्बोधनं। यत एवममङ्गस्वभावोऽत एव स एष वै शुद्धो रागादिकालुष्यरहित एव। पावयति पुनातीति वा पूतः कर्त्तरि निष्ठा न कर्मणि, आत्मान्यस्य सर्वस्यापि जडतयाऽशुचेरात्मपावयितृत्वानुपपत्तेः। शून्यो निष्प्रपञ्चः। शान्तो निर्विकारः कूटस्थ इत्यर्थः। अप्राणः प्राणहीनः प्राणनादिधर्मरहित इत्यर्थः। निरात्माऽत्रात्मेति मन उच्यते मनोरहितः सङ्कल्पाध्यवसायादिधर्मरहित इत्यर्थः। अन्तो विनाशस्तद्रहितोऽनन्तः। अक्षय्यः क्षेतुमशक्योऽपक्षयरहित इत्यर्थः। स्थिरो वृद्धिरहितः। शाश्वतः शश्वद्भवः सर्वदैकरूपो विपरिणामशून्य इत्यर्थः। अजो जन्मरहितः। स्वतन्त्रो जन्मानन्तरभाव्यस्तित्वविकाररहितः। एवंविध आत्मा क्व तिष्ठतीत्यपेक्षायामाह "स्वे महिम्नि तिष्ठति" इति। स्वस्वरूपे स्थितो नास्याधारोऽस्तीत्यर्थः। तथा च श्रुत्यन्तरं—

'स भगवः कस्मिन् प्रतिष्ठित इति। स्वे महिम्नि यदि वा न महिम्नि' (छा० अ० ७। खं० २४) इति।

अन्यो ह्यन्यस्मिन् प्रतिष्ठितो भवति, नास्यान्योऽस्ति यत्रायं प्रतिष्ठितः स्यात्, तस्मात् स्वमहिम्न्येवावस्थितो नान्याधीनतयेत्यर्थः। य एष एवंलक्षण आत्मा अनेनेदं शरीरं चेतनवच्चेतनमिव प्रतिष्ठापितं व्यवहारकालेऽबाधिततया स्थापितं, अस्य शरीरादिसंघातस्य प्रचोदयिता प्रेरकश्च यो वास्ति सोऽप्येष एव इति होवाचेति सम्बन्धः।

वैषोऽप्यस्येति। ते होचुर्भगवन् कथमनेनेदृशेनानिष्ठे-नैतद्विधमिदं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान् होवाच॥ ४॥

स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञोऽबुद्धि-

अचेतने देहादौ चेतयितृत्वनियन्तृत्वाभ्यां ताटस्थ्येनास्तीति प्रतिपन्नस्य जिज्ञासितस्य स्वरूपमेतत् स वा एष इत्यादितिष्ठतीत्यन्तेनाभिहितं। एतच्चोपदेशमात्रेणोक्तं, युक्तितो व्यवस्थापयितुं पुनः प्रश्नमुत्थापयति "ते होचुः० होवाच" इति। ईदृशेनोक्तलक्षणेन स्वे महिम्नि स्थितेनेत्यर्थः। अत एवानिष्ठेन, निष्ठा तात्पर्यं ममानेन भाव्यमित्येवमाकारा प्रणतिः सा यस्य नास्ति सोऽनिष्ठस्तेन। देहादावहम्ममताहेतुशून्येनेत्यर्थः। अनिष्टेनेति पाठेऽयमर्थः, इष्टमिच्छा भावे निष्ठा, नास्तीष्टं यस्य सोऽनिष्टः इच्छारहितस्तेनेति। अणिष्ठेनेति पाठे तु सूक्ष्मतरेण दुर्लक्ष्येणेत्यर्थः। व्याख्यातार्थमन्यत्॥ ४॥

सत्यमेवंविधस्यात्मनः परमार्थतश्चेतयितृत्वं प्रेरयितृत्वं वा न सम्भवति तथापि शुक्त्यादौ रजतादिवत् स्वात्मन्यध्यस्तस्यान्यत्राभावादधिष्ठानपारतन्त्र्यात् तद्धर्मकमिवाचेतनमपि चेतनमिवानधिष्ठितमप्यधिष्ठितमिवावभासते शरीरादि न वस्तुत इत्यभिसन्धायोक्तं स्वरूपमनूद्य तस्याविद्याकृतकार्योपाधिप्रवेशनिमित्तमिदं धर्मद्वयमित्युत्तरमाह प्रजापतिः "स वा एष० एवं" इति। स वै पूर्वोक्त एष विद्वत्प्रत्यच आत्मा सूक्ष्मोऽविषयः यतोऽग्राह्यः

# पूर्वमिहैवावर्ततेऽंशेनेति सुप्तस्येवाबुद्धिपूर्वं विबोध[1]

कर्मेन्द्रियागोचरोऽदृश्यो ज्ञानेन्द्रियागोचरो नापि मनोगोचरः, 'अप्राप्य मनसा सह' इति श्रुतेः। एतेनानुमानादिगोचरत्वमपि निरस्तं, उक्तलक्षणात्मस्वरूपव्याप्तलिङ्गादिसम्बन्धानिरूपणादतो निरतिशयमस्य सौक्ष्म्यं सिद्धमित्यर्थः। यदि सर्वप्रमाणागोचरः कथमस्य सद्भावस्तत्राह "पुरुषसंज्ञः" इति। पूर्षु शेते इति वा पूर्णमनेन सर्वमिति वा पूर्वमेवास्ते इति वा पुरुषः, अतः पुरुष-संज्ञया प्रसिद्धः स्वतःसिद्धसद्भाव इत्यर्थः। तथा च श्रुतयः—

'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैतेन किञ्चनानावृतं नैतेन किञ्चनासंवृतं' इति।

'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं' इति।

'पूर्वमेवाहमिहासमिति तत् पुरुषस्य पुरुषत्वं' इति च। स एवंविध आत्माऽसङ्गस्वभावोऽप्यबुद्धिपूर्वमसङ्कल्पितमेवेहैव देहादि-सङ्घात एव आवर्त्तते आसमन्तादापादतलमस्तकमहमित्यभिमन्य-मानो वर्त्ततेंऽशेन एकदेशेन संघाताविविक्तस्तदनुगतः स्वचैतन्या-भासोंऽश इत्युच्यते न पुनर्निरवयवस्य विभोरात्मनः स्वाभाविकोंऽश एकदेशलक्षणः, सम्भवति अतस्तेनांशेनैवेहावर्त्तते, इतिशब्दः प्रकारवचनः, ईदृशो वर्तत इत्यर्थः। स्वमायावेशवशाच्चित्सदा-नन्दानन्तब्रह्मरूपतां स्वाभाविकीं विस्मृत्याहं मनुष्य इत्याद्यतद्रूप-मेवात्मानमकस्मात् मन्यत इत्यस्मिन्नर्थे दृष्टान्तमाह "सुप्तस्येव"

(१) विबोधाः इति पु० पा०।

**एवमिति। अथ यो ह खलु वावैतस्य सोंऽशोऽयं**

---

इति। इवशब्दो यथाशब्दार्थः। यथा 'सुप्तस्य' सुप्तस्य सुषुप्तिमुपगतस्य

'सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति'

इति श्रुत्यन्तरे ब्रह्मसम्पत्तिर्हि सुषुप्तावात्मनोऽधिगता, तथा सुप्तस्य यथाऽबुद्धिपूर्वकमकस्माद्विबोधो विषयविशेषदर्शनावस्थापत्तिरेवमिहावर्त्तनमस्येति। इति स्थितिरित्यर्थः। उक्तं निमित्तविशेषमनूद्य प्रश्नस्योत्तरमाह "अथ यो ह खलु ० वैषोऽप्यस्य" इति। अथ एवं स्थिते सति यो ह खलु वाव य एव एतस्यात्मनो यथा व्याख्यातोंऽशः सोऽयं विश्वाख्य इति सम्बन्धः। कोऽसौ यश्चेतामात्रः चेतनामात्रश्चित्स्वभाव इति यावत्। प्रतिपुरुषः प्रतिबिम्ब आदर्श इव मुखमप्पात्र इव सूर्यादिरन्तःकरणादौ प्रतिफलितः, अत एव क्षेत्रज्ञः क्षेत्रं शरीरं तदहमस्मीति जानातीति क्षेत्रज्ञः। तथाचोक्तं भगवता—

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इति।

(गीता० अ० १३)

तस्य क्षेत्रज्ञत्वे लिङ्गमाह सङ्कल्पेति। सामान्यत इदमिति विषयस्वरूपमात्रकल्पनं सङ्कल्पः। अध्यवसायस्तत्र निश्चयरूपा वृत्तिः। अभिमानोऽहं ममेदमिति स्वस्वामिभावोल्लेखः। तथा च सङ्कल्पाध्यवसायाभिमानैर्देहविषयैरस्यास्मिन् क्षेत्रज्ञोऽन्य इति

यश्चेतामहः प्रतिपुरुषः क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यश्चेतनेनेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति । ते होचुर्भगवन् यद्यनेनेदृशेनानिष्ठेनैतद्विधमिदं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान् होवाचेति ॥ ५ ॥

प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् स नारमतैकः सो

---

गम्यते इत्यर्थः। एवम्भूतो यः समष्टिदेहं विराडाख्यमभिमन्यते स प्रजापतिर्ब्रह्मा वैश्वानर इति चाख्यायते वेदान्तेषु। यः पुनः स एव व्यष्टिशरीरमण्डजादिचतुर्विधमभिमन्यते स विश्व इत्याख्यायते। तेनैवंविधेन चेतनेन स्वानुप्रवेशमात्रेणेदं शरीरं चेतनायुक्तमिव प्रतिष्ठापितं प्रचोदयिता वाप्यन्तर्यामिरूपेणैष एवास्येति सर्वमुक्तमित्यर्थः। नन्वसङ्गस्यात्मनः कूटस्थस्य कथं शरीरसम्बन्धनिबन्धनं क्षेत्रज्ञत्वं कथं वास्य शरीरे चेतयितृत्वेन प्रेरयितृत्वेन चावस्थितिरिति विस्मयमापन्ना इव पुनः पृच्छन्ति "ते होचुर्भगवन् ० होवाचेति" इति। व्याख्यातार्थोऽयं ग्रन्थः ॥ ५ ॥

नात्र विस्मयः कार्यो यतः स्वयमेव स्वमायाशक्तिमधिष्ठाय निर्माय चराचरं तत्रानुप्रविष्ट इति सर्वोपनिषत्सूद्घुष्यमाणत्वादित्यभिप्रेत्य सर्वशाखाप्रत्ययन्यायेन देहसृष्टिप्रकारं तावदाह "प्रजापतिर्वा ० असृजत" इति। प्रजापतिर्हिरण्यगर्भः, वैशब्दस्तस्य शाखान्तरोक्तविशेषस्मारकः। तथा हि

त्मानमभिध्यात्वा बह्वीः प्रजा असृजत। ता अश्मेवा-

—

'सदेव सोम्येदमग्र आसीत्' 'तद्धेदं तर्ह्यव्याकृतमासीत्' 'आत्मा वा इदमेक एवाग्र आसीत्'

इत्यादिश्रुतिषु जगतः प्रागवस्थां सदात्मादिशब्दनिर्दिष्टपरमात्माभेदेनाम्नाय ततो नामरूपाभ्यां भूतसूक्ष्मक्रमेण जगद्व्याकरणं श्रूयते—

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' 'तत्तेजोऽसृजत' 'तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादि।

तथा चाकाशादिक्रमेण तन्मात्राणि भूतसूक्ष्माणि सृष्ट्वा तेभ्यश्च तदवस्थेभ्यः प्राणान्तःकरणकर्मज्ञानेन्द्रियप्रकारं लिङ्गमुत्पाद्य तदनुप्रविश्य हिरण्यगर्भसञ्ज्ञां प्राप्य जीवरूपतामापन्नोऽनन्तरं स्वोपाधिभूतभूतसूक्ष्माण्यपञ्चीकृतानि पञ्चीकृतानि सम्पाद्य तेभ्यो ब्रह्माण्डान्तं समष्टिव्यष्टिरूपं जगत् सृष्ट्वा तेष्वनुप्रविश्य पश्यञ्छृण्वन् मन्वानो विहरन्नचेतनं चेतयमानः सुकृतदुष्कृतकर्माचरन् तत्फले सुखदुःखे भुञ्जानः प्रेर्यप्रेरकभावमापद्यमानः क्षेत्रज्ञः संसारी विज्ञानात्मा पुरुष इति च तत्र तत्र व्यपदिश्यते। एवं शाखान्तरोक्तविशेषं वैशब्देन स्मारयित्वा शरीरसृष्टिं प्राजापत्यां प्राह, प्रजापतिर्वै सच्छब्दवाच्यादज्ञानशबलात् प्रथममुत्पन्नः, एको ऽसहायः, अग्रे चराचरसृष्टेः पूर्वमतिष्ठत् आसीत्, तथा च श्रुत्यन्तरं—

'आत्मैवेदमग्र आसीत् पुरुषविधः' इति।

स एको ऽसहायत्वान्नारमत रमणं प्रीतिविशेषं न प्राप।

प्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत् । स नारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं विवि-

---

सोऽात्मानं स प्रजापतिरात्मानं स्वमेवाभिध्यात्वाऽहं बहु स्यां प्रजायेयेत्याभिमुख्येनालोच्य बह्वीर्नानाप्रजाः देवतिर्यङ्मनुष्यलक्षणा असृजत सृष्टवान् सङ्कल्पमात्रेणैवानेकरूपोऽभवदित्यर्थः । एवं सृष्टिमुक्त्वा सृष्टेषु कार्येष्वनुप्रवेशप्रसङ्गमाह "ता अश्मेव ० अपश्यत्" इति । एवं सृष्टाः ताः प्रजा अपश्यत् दृष्टवान्, कीदृशीः अश्मेव पाषाणवदचेतनाः, अप्रबुद्धाः बुद्धिरहिताः अन्तःकरणशून्या इति यावत् । अप्राणाः प्राणवर्जिताः, अत एव स्थाणुरिव काष्ठमिव तिष्ठमाना अवतिष्ठमाना इति । एतेन सङ्घातचेतनतावादशङ्का परिहृता । ततः किं कृतवानिति तदाह "स नारमत ० विविशानि" इति । स प्रजापतिरेवं-विधाः स्वसृष्टाः प्रजा दृष्ट्वा पुनरपि नारमत नाप्रीयत, तदा सोऽरमणनिवृत्त्यर्थममन्यत विचारितवान् । किं एतासां प्रतिबोधनाय प्रबुद्धतामापादयितुं चेतनतामापादयितुमभ्यन्तर-मभितोऽन्तरं सर्वं देहमापादतलमस्तकं विविशानि विशेषेण विशानि प्रवेक्ष्यासीत्यमन्यतेत्यर्थः । अत्र ह्यात्माऽग्निरिवायः-पिण्डादिसमारूढो विशेषतः परिस्फुरति नान्यत्रेति देहेषु प्रवेश उच्यते न पुनस्तत्रैव गृहं कृत्वा ततोऽन्यः संस्तत्र प्रविष्टः किन्तु स्वात्मानमेव प्रसिद्धमायाविवद्बहुधा व्यूह्य तत्तद्देहाद्यभेदेन विशेषतो द्रष्टृश्रोतृमन्तृविज्ञात्रादिभावेन विभाव्यत इति भावः ।

शामि । स वायुरिवात्मानं कृत्वाभ्यन्तरं प्राविशत् । स एको नाशकत् स पञ्चधात्मानं विभज्योच्यते । यः प्राणोऽपानः समान उदानो व्यान इति । अथायं य ऊर्द्धमुत्क्रामत्येष वाव स प्राणोऽथ योऽयमवाङ् सङ्का-

---

प्रवेशप्रकारमाह "स वायुः ० प्राविशत्" इति । स प्रजापति-रीश्वरः आत्मानं स्वरूपं वायुरिव कृत्वा वायुः प्राणः प्राणवायु-मुपाधिं कुर्वंस्तद्भावमापन्नो वायुरिवेत्युच्यते इत्यमभ्यन्तरं प्राविशदित्यर्थः । तथा च श्रुत्यन्तरे

'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं'

इति प्राणरूपं ब्रह्मोपक्रम्याम्नायते । एवमपि भस्त्रेव वायुना पूर्णा न व्यचेष्टत, यदा शरीरं जातं तदा किं कृतवानीश्वरस्तदाह "स एकः ० उच्यते" इति । एकरूपः सन् नाशकत्, देहं विचालयितुं नाशक्नोत्, स पुनरात्मानं पञ्चधा विभज्य क्रमाक्रमाभ्यां क्रियाभेदं कुर्वन् देहादिकं चालयन्नास्ते इति प्राणादिशब्दैः स एवोच्यत इत्यर्थः । के ते प्राणादयो विभागाः किंलक्षणाः किंकर्माणश्चेत्यपेक्षायामाह "यः प्राणः ० व्यान इति" इति । इत्येते पञ्च निर्दिष्टाः । अथैषां लक्षणं क्रियाञ्च दर्शयति "अथायं ० उदानः" । अथैषां मध्ये योऽयं वायुरूर्द्धमुत्क्रामति नाभेरूर्द्धं शिरःपर्यन्तमुच्चैः क्रामति सञ्चरति मुखनासिकयो-रुपलभ्यमान एष वाव सः एष एव प्राणः प्राणसञ्ज्ञो वायुभेद

मत्येष वाव सोऽपानोऽथ येन वा एता अनुगृहीता इत्येष वाव स व्यानोऽथ योऽयं स्थविष्ठो धातुरन्नस्यापाने प्रापयत्यणिष्ठो वाङ्गेऽङ्गे समानयत्येष वाव स समानसंज्ञा

इत्यर्थः। एवंविधक्रियावत्त्वमेवास्य लक्षणमुक्तं वेदितव्यम्। एवमुत्तरत्रापि योजना। अथ योऽयं वायुविशेषोऽवाङ्नाभेरधः पायुपर्यन्तं सङ्क्रामति सञ्चरत्येष वाव सोऽपान इति पूर्ववद्योजना। उद्देशक्रमं परित्यज्य मध्ये व्यानं लक्षयति तस्य प्राणापानसन्धिलेन तयोरन्तरा नियतत्वात्। तथा च श्रुत्यन्तरं—

'अथ यः प्राणापानयोः सन्धिः स व्यानः' इति।

चरमतोऽस्योद्देशस्तु सर्वशरीरचेष्टादिहेतुत्वेन सर्वप्राणव्यापकत्वादिति द्रष्टव्यम्। अथ येन वायुविशेषेण एता एतौ प्राणापानौ अनुगृहीता अनुगृहीतौ इत्येवं वर्तमान एष वाव स व्यानसञ्ज्ञः।

'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः'

इत्यादिश्रुत्यन्तरप्रसिद्धिमादायाशितस्य जाठराग्निपक्वस्य स्थूलसूक्ष्मविभागविनियोजनकर्ता समान इति व्युत्पादयति। अथ योऽयं प्रसिद्धो वायुविशेषोऽन्नस्य भुक्तस्य स्थविष्ठः स्थूलतमो धातुरसारभागः पुरीषाख्यो योऽस्ति तमपाने प्रापयति अपानवायुसञ्चारस्थानं गमयति, तथाऽन्नस्य यो वाऽस्यणिष्ठोऽणुतरो मध्यमश्चेतिभागद्वयमेकीकृत्योच्यते, तं च देहमनःस्थितिहेतुमङ्गेऽङ्गे

उत्तरं व्यानस्य रूपं चैतेषामन्तरा प्रसूतिरेवोदानस्याथ योऽयं पीताशितमुद्गिरति निगिरतीति वैष

---

प्रत्यङ्कं शरीरस्य समानयति सम्यग् आसमन्तान्नयति प्रापयत्येष वाव स समानसञ्ज्ञा समानसञ्ज्ञ इत्यर्थः। समानव्यानयोर्मध्ये उदानस्योद्देशे कारणं सूचयन्नुदानस्याभिव्यक्तिस्थानमाह उत्तरमिति। एतेषां प्राणापानसमानानामुत्तरमुपरि एतेषां सम्यग्व्यापारानन्तरं व्यानस्य रूपञ्च व्यानव्यापारश्चान्तरा मध्ये, प्रसूतिः प्रसवोऽभिव्यक्तिरेवोदानस्य अन्तरेवेत्येवकारोऽभिन्नक्रमः। उक्त एव चान्वयः। अयमर्थः प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां धम्यमानो हि जाठरोऽग्निरन्नं भुक्तं पचति तत् पाकनिर्वृत्तञ्च समानो विभज्य समं नयति। एवमशितपीतयोः समं नीतयोः सतोः क्षुदुत्पद्यते पिपासा च, तदोदान उद्भूतवृत्तिरास्यगतं यत्किञ्चिन्निगिरति पित्तोद्रेकवशाद्वोद्गिरति हृदयादिगतं कफादिकं ततो देहे बलपुष्ट्याद्याधानं व्यानवायोः कृतं भवति। एवमुक्तप्रकारेण पूर्वेषां चतुर्णां वायुव्यापाराणां यथावदनिवृत्तौ व्यानस्य सञ्चारसौष्ठवाभावाद्देहे बलपुष्ट्यादयो न जायन्ते इत्येतदनुभवसिद्धं शास्त्रसिद्धञ्च, अतो युक्तोऽयं क्रमनिर्देश इति। अथ योऽयं पीताशितं पीतञ्चाशितञ्च पीताशितं तदुद्गिरति ऊर्द्धं निःसारयति, निगिरति वा नीचैर्गिरति तीरोदधातीति वा एष वाव स उदान इति

वाव स उदानः। अथोपांशुरन्तर्याममभिभवत्यन्तर्याम उपांशुश्चैतयोरन्तरा देवौष्ण्यं प्रासुवत् यदौष्ण्यं स पुरुषोऽथ यः पुरुषः सोऽग्निर्वैश्वानरः। अन्यत्राप्युक्त-

पूर्ववत्। एवमात्मनः प्राणोपाधिकस्य शरीरप्रवेशमुक्त्वा तद्व्यापारेण व्याप्रियमाणः शरीरं नियमयतीत्युक्तमिदानीं जाठराग्न्युपाधिकस्य शरीरे चेतयितृत्वं दर्शयितुं तदभिव्यक्तिं तावदाह "अथोपांशुः० वैश्वानरः" इति। अथैतदुच्यते इति, अथशब्दोऽर्थान्तरोपक्रमार्थः। अस्ति कर्मकाण्डे उपांशुग्रहोऽन्तर्यामग्रहश्चेति द्वौ ग्रहौ परस्परोपकार्योपकारकभावेन संसृष्टावित्याम्नातम्। यतः श्रूयते—

'प्राणापानौ वा उपांश्वन्तर्यामौ व्यान उपांशुसवनो यदेते पात्रे एतं ग्रावाणमाहतीयसवनाच्च जहीतः' इति।

तथान्यत्रापि—

'अग्निर्देवता गायत्री छन्द उपांशोः पात्रमसि, सोमो देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रमसि, इति

मन्त्रयोरनयोरग्नीषोमदेवताऽधिगम्यते, तौ च प्राणापानात्मकत्वेनाध्यात्मशास्त्रे प्रसिद्धौ, अत इहोपांश्वन्तर्यामशब्दाभ्यां प्राणापानौ गृह्येते। तथा चायमर्थः। यथोपांशुग्रहोऽन्तर्याममभिलक्ष्य भवति अन्तर्यामग्रहश्चोपांशुं तयोश्चान्तरा सोमः सूयते तथात्रापि शरीरे प्राणोऽपानमभिभवति अपानश्च प्राणमित्यन्योन्याभिकाङ्क्षया प्रवर्तमानयोरुपांश्वन्तर्यामोपमितयोश्चैतयोः प्राणापानयोरन्तराऽन्तराले देवो द्योतनस्वभावश्चैतन्यात्मा औष्ण्यं उष्ण-

**मयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति।**

स्वभावमात्मान प्रासुवत् प्रसूतवान् उष्णरूपेणाभिव्यक्त इत्यर्थः। देवौष्ण्यमिति सन्धिश्छान्दसः। यद्वा एतयोरन्तरं मध्यं मूला-धारदेशस्तस्मात् प्राणापानाभ्यां पार्श्वगताभ्यां धम्यमानादेव न स्थानान्तरादिति यावत्। औष्ण्यं प्रासुवदिति पूर्ववत्। यदिदमौष्ण्यं स पुरुषो जीवो देहस्याग्निरूपेण धारयिता, ऊष्मरूपात्मावस्थाने हि जीवतीति प्रसिद्धिः, तदपगमे च मरणप्रसिद्धिः। तथा च श्रुत्यन्तरम्—

'उष्णो जीविष्यन शीतोमरिष्यन्' इति।

अथैवं सति यः पुरुष आत्मा सोऽग्निरग्रं नयतीत्यग्रणीरग्नि-रुच्यते। अयं हि सर्वधातुजातं पचन्नग्रं नयति अतोऽग्निः। वैश्वानर इति चायमुच्यते विश्वं सर्वं नरशब्दोपलक्षितं देहादिकं नयत्यु-त्क्रमय तीति विश्वानरो विश्वानर एव वैश्वानर इति। एतदेव पुरुषाग्न्योरेकत्वमिहोक्तं सिद्धवत्कृत्य शाखान्तरे जाठरस्याग्नेरुपा-सनमुक्तं तदिह प्रसङ्गादुपदिशति—

"अन्यत्राप्युक्तं ० शृणोति" इति।

अन्यत्र वृहदारण्यकेऽपीत्यर्थः। अयमग्निर्वैश्वानरः पुरुषाख्यो योऽयं प्रसिद्धोऽन्तःपुरुषे पुरुषः शरीरं शरीरमध्ये। तत्सद्भावे कार्यलिङ्गकं प्रमाणमाह, येन पुरुषान्तःस्थेनेदं वक्ष्यमाणमन्नं पच्यते पानस्याप्युपलक्षणं मेतत्। किं तदन्नं तदाह यदिदमद्यतेऽविशेषेण

**स वा एष पञ्चधात्मानं विभज्य निहितो गुहायाम्। मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प**

सर्वैः प्राणिभिर्यदिदमोदनाद्यद्यते यद्वा पीयते तदन्नं पानञ्चेदं येन पच्यते परिपाकं नीयतेऽयमग्निर्वैश्वानर इत्यन्वयः। तत्सद्भावेऽनुमानमुक्त्वा प्रत्यक्षमप्याह तस्येति, तस्याग्नेरेष प्रसिद्धो घोषः शब्दो भवति। कोऽसौ यं घोषं, एतदिति क्रियाविशेषणं एवं श्रवणं यथा स्यात् तथेत्येतत्, कर्णावपिधायाच्छाद्य शृणोति सर्वो लोकः. एवमेष घोषोपलम्भो जाठराग्नौ प्रत्यक्षमित्यर्थः, 'तस्यैषा श्रुतिर्यत्रैतत् कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति' (छान्दो० अ० ३ ख १ ३) इति छान्दोग्ये तस्याग्नेरेवैतच्छ्रवणमिति भाष्यकारैर्व्याख्यातत्वात्। जाठराग्नेर्वैश्वानरात्मनो घोषरूपेण श्रवणनिर्देशप्रसङ्गेनेदमपरमुच्यते पुरुषाणां पारलौकिकहितसाधनप्रवृत्तौ सावधानत्वाय, स पुरुषो घोषश्रवणवान् यदा यस्मिन् काले उत्क्रमिष्यन् मरिष्यन् भवति तदा एनं घोषं न शृणोति, तदश्रवणे आसन्नमरणतां ज्ञात्वा यत् करणीय मन्येत तत् कुर्यादित्यभिप्रायः। एवं प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुवर्त्तयितुमुक्तार्थमनुवदति "स वा ० गुहायां" इति। स वै एष यो वैश्वानरः पुरुष इति चोक्तः प्राणाद्यात्मना पञ्चधाऽऽत्मानं विभज्य गुहायां, गूहति संवृणोति ज्ञानानन्दाद्यतिशयमिति गुहा बुद्धिः, तस्यां निहितः स्वयमेव स्वात्मना निषक्त इत्यर्थः। विशेषव्यवहारायान्तःकरणोपाधिं

आकाशात्मेति । स वा एषोऽस्माद्धृदन्तरादकृतार्थो-ऽन्यतार्थानश्नानोति । अतः खानीमानि भित्त्वो-

---

प्राप्त इति तात्पर्यार्थः । तदेवमौष्ण्येन स्वरूपेण प्राणान्तः-करणभावमापन्नो विज्ञानात्मा यां यामवस्थामनुभवति तां तां क्रमेण वक्तुमारभमाणो बुद्धितत्स्थाभासाविवेकात् प्राप्तान् व्यपदेशभेदांस्तावदाह "मनोमयः ० आकाशात्मेति" इति । मनोमयो मनःप्रायो मनोवृत्तिभेदेष्वशेषेषु विशेषत उप-लभ्यमानत्वात् । प्राणः शरीरमस्येति प्राणशरीरः प्राणभेदैरेव व्याप्रियमाणत्वात्, अन्यथा चिन्मात्रस्य कूटस्थस्य स्वतो विशेष-भान[1] व्यापारयोरनुपपत्तेः । भाः चित्प्रकाशो रूपं स्वरूपम-स्येति भारूपः । सत्याः सङ्कल्पा अवश्यम्भाविनः पूर्वकृतज्ञान-कर्मसंस्कारभाविताः सङ्कल्पा अस्येति सत्यसङ्कल्पः । आकाशव-दसङ्गोऽग्राह्य आत्मा स्वरूपमस्येत्याकाशात्मा । एवमुपाधि-धर्मैः स्वधर्मैश्चाविविक्त आत्मा जीवभावमुपगत इत्यर्थः । तच्चोक्तं श्वेताश्वतरोपनिषदि 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्य-वरोपि दृष्टः' इति । य एवमविद्याकृतोपाधिमात्मत्वेनोपगतो विस्मृतपरमानन्दनिजस्वभावः सोऽकृतकृत्यमात्मानं मेने इति तद्वृत्तान्तमाह "स वा ० अश्नानोति" इति । स वा एष पूर्वोक्तोऽकृतार्थोऽकृतप्रयोजनः सन्नस्मादेतच्छरीरगताद्धृदन्तरात्

---

(१) विशेषमात्रा० इति सो० पु० पाठः ।

दितः पञ्चभी रश्मिभिर्विषयानत्ति। इति बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः कर्मेन्द्रियाण्यस्य हया रथः शरीरं मनो नियन्ता प्रकृतिमयोऽस्य प्रतोदोऽनेन खल्वीरितः परिभ्रमतीदं शरीरं चक्रमिव

हृदयस्थानस्थादन्तःकरणाद्धेतुभूतात् अर्थान् विषयानन्नानि भुङ्क्ते व्याप्नवानीति वाऽमन्यत सङ्कल्पितवानित्यर्थः। ततः किं वृत्तं तदाह "अतः ० विषयानत्ति" इति। यत एवमतः इमानि प्रसिद्धानि शीर्षण्यानि खानि छिद्राणि त्वचञ्च भित्त्वा विदार्योदित उद्गतो गवाक्षेभ्य इवालोकः प्राणान्तःकरणोपाधिः सन् वक्ष्यमाणैः पञ्चभी रश्मिभिर्विषयान् शब्दस्पर्शादीन् अत्ति भुङ्क्ते व्याप्नोतीत्यर्थः। इदानीमस्य लोकसिद्धं विषयानुभवप्रकारमनुवदन् शरीरादे रथादिकल्पनां विदधानोऽस्य विषयमोक्षप्राप्तिमार्गयोः स्वातन्त्र्यं दर्शयति "इति बुद्धीन्द्रियाणि ० वैषोऽप्यस्येति" इति। इत्येवं विषयान् भुञ्जानस्य यानीमानि प्रसिद्धानि बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि तान्यस्य रथिनो हयरश्मयः प्रग्रहाः, कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यान्यस्य हयाः रथवाहाः, शरीरमिदं स्थूलमेव रथः, मनः सङ्कल्पाद्यात्मकं नियन्ता नितरां यन्ता सारथिरित्यर्थः, प्रकृतिः स्वभावः कर्मज्ञानवासना तन्मयस्तद्रूपोऽस्य प्रतोदः कशादिर्वाहननोदनसाधनम्। कथमयं प्रतोद

मृताचे[1] नेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ॥

स वा एष आत्मेहोशन्ति कवयः सितासितैः

इति तदुपपादयति अनेनेति, अनेन प्रकृतिमयेन खलु निश्चितमीरितः प्रेरितः परिभ्रमति। किमिदं शरीरं रथः। तत्र दृष्टान्तमाह चक्रमिवेति, मृत्पचः कुलालः तेनेरितं चक्रमिवेत्यर्थः। इदं शरीरमित्याद्युक्तार्थम् ॥ ६ ॥

यदिदं स्वसृष्टदेहाद्यनुप्रवेशेनास्य संसारित्वमुक्तं तन्नायं स्वतः संसारधर्मवान् किन्तूपाधिवशात् तथा भाति, तत उपाधेर्विविच्य तत्स्वरूपमन्वेषणीयमात्मनः संसारित्वभ्रमनिवृत्तय इति दर्शयितुमुक्तं हेयस्वरूपानवगमे तद्धानासम्भवादित्यभिप्रेत्य अयमेवात्मा मुञ्जादिषीकावद्देहादिसङ्घातादिविच्यावधारणीय इत्याह "स वा ० इत्यवस्थिता इति" इति। यमित्यध्याहारः, यमुशन्ति कमनीयतया जानन्ति कवयो मेधाविनः परमप्रेमास्पदतया प्रत्यग्रूपेण जानन्ति स वै स एवैष आत्मा न तु संसार्येवेत्यर्थः। ननु संसारितायाः अस्योक्तत्वात् कथं न संसारीति तत्राह सितासितैरिति। सितशब्देनोज्ज्वलत्वचा विना स्पृहणीयतोच्यते, असितशब्देन मलिनवाचिना प्रतिकूलवेदनीयतोच्यते, तथा च सितासितैः सुखदुःखैः कर्मफलै-

(१) मृत्यवेनेति सो० पु० पा०।

**कर्मफलैरनभिभूत इव प्रति शरीरेषु चरत्यव्यक्त-त्वात् सौक्ष्म्याददृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थो-**

रनभिभूतोऽसंस्पृष्टः । इवशब्दोऽवधारणार्थः । प्रतिशब्दो व्यवहितक्रियया सम्बध्यते । कर्मफलैरनभिभूत एव शरीरेषु प्रतिचरतीत्यन्वयः । प्रतिशरीरेषु सर्वेषु शरीरेष्विति वा । यद्वा प्रति प्रातिलोम्येनाविषयत्वेन शरीरेषु चरतीत्यर्थः । अतो नायं स्वरूपतः संसारी किन्त्वलक्तकादिसन्निहितो लोहितात्मनेव स्फटिकः सङ्घातोपाधिसन्निहितः संसार्यात्मना भासत इति भावः । उक्तेऽर्थे हेतुमाह, अव्यक्तत्वादित्यादिना । व्यक्तं विषयरूपं दृश्यं देहाद्यज्ञानपर्यन्तं तद्विपरीतत्वमव्यक्तत्वं तस्मात् । न हि संसार्य्यव्यक्तो भवति व्यक्तविकारानुबन्धित्वात् तस्य । अतोऽव्यक्तत्वान्न संसारीत्यर्थः । कुतोऽव्यक्तत्वं चिदात्मनोऽहमिति व्यक्ततयोपलभ्यमानत्वादित्यत आह सौक्ष्म्यादिति । अनाधेयातिशयत्वं सौक्ष्म्यमुच्यते, न हि चैतन्यस्वरूपेऽमूर्त्तेऽनवयवे कश्चिदतिशय आधीयते आकाश इव कारकैः । यत्र पुनः कारकव्यापारापन्नोऽतिशयस्तद्व्यक्तमितिप्रसिद्धं यथा घटादि निष्पाद्यं प्रकाश्यं चेति, तस्मादस्य तद्वैलक्षण्यात् सौक्ष्म्यादव्यक्तत्वमितिभावः । तदेवोक्तलक्षणं सौक्ष्म्यं साधयति अदृश्यत्वादग्राह्यत्वाच्चेति । ज्ञानकर्मेन्द्रियाविषयत्वादित्यर्थः । चतुर्विधक्रियाफलविलक्षणत्वादिति भावः । हेत्वन्तरमाह निर्ममत्वाच्चेति । चकारान्निरहङ्कारत्वमपि समुच्चीयते । यत्राहन्ता भवति तत्संसृष्टे ममता भवति, अस्य

ऽसति कर्त्ताऽकर्त्तैवावस्थः स वा एष शुद्धः स्थिरोऽचल-श्चालेप्योऽव्यग्रो निस्पृहः प्रेक्षकवदवस्थितः स्वस्थश्च।

---

तु सुखाद्युपलब्ध्यायतने शरीरेऽनुगतस्यापि तत्राहङ्कारममत्व-योरभावान्न संसारितेत्यर्थः। नन्ववस्थात्रयसम्बन्धिनः कथ-महङ्कारममकारयोरभावस्तत्राह अनवस्थ इति। अवस्थात्रय-रहितोऽवस्थासाक्षित्वात्, न हि दृश्यधर्मो द्रष्टर्युपरज्यत इत्यर्थः। अथवा ननु शरीरेषु चरतः कथं तत्राहम्ममताऽभावः इति तत्राहाऽनवस्थ इति। न विद्यतेऽवस्थाऽवस्थानं यस्य सोऽनवस्थः। निरवयवत्वामूर्त्तादिलक्षणस्याव्याहृत्तानगतस्य न क्वाप्यवस्थिति-रुपपद्यत इति भावः। ननु धर्माधर्माभ्यां शरीरादिकर्त्तुः कथमित्यमसंसारित्वं वर्ण्यत इत्यत आह असतीति। अव्याकृत-शब्दितमज्ञानमसदित्युच्यते। अकर्त्तैवासत्यवस्थोऽवस्थितः कर्त्तेत्य-न्वयः, वस्तुतोऽकर्त्तैव सन्नज्ञानावेशात् कर्त्तेवावभासत इत्यर्थः। एवमध्यारोपापवादाभ्यां विचार्य निर्णीतमात्मनः स्वरूपं व्यप-दिशति स वा इत्यादिना। सवितरि दिवान्धपरिकल्पितान्ध-कारवदज्ञानस्यापि वस्तुत्वाभावादयमात्मा शुद्धो मिथ्याज्ञानाद्य-शुद्धिसंसर्गरहितः सर्वस्यागमापायसाक्षित्वात् स्थिरः आगमा-पायशून्यः व्यापकत्वादचलः स्वतः क्रियाशून्यः चकारादनन्यप्रेर्यो-ऽपीत्यर्थः। अतएवालेप्यो धर्माधर्मतत्फललेपानर्हः। न ह्यक्रियो-ऽकर्त्ता कर्मतत्फलभाग्भवतीत्यर्थः। अव्यग्रोऽसम्भ्रमो यतो निस्पृहः परिपूर्णपरमानन्दरूपत्वात्, स्पृहणीयाभावात् स्पृहाभावे सत्यव्यग्रः

ऋतभुक् गुणमयेन पटेनात्मानमन्तर्धायावस्थिता इत्यवस्थिता इति ॥ ७ ॥

इति मैत्र्युपनिषदि द्वितीयः प्रपाठकः ॥

---

इत्यर्थः । अतएव प्रेक्षकवदुदासीन इवावस्थितः । कुत्रावस्थित इति तदाह स्वस्थः स्वे स्वरूपेऽवस्थितो नान्याधार इत्यर्थः । 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वं' (छान्दो० अ० ७) इति श्रुत्यन्तरात् । चकारः सर्वविशेषणसमुच्चयार्थः । उपसंहरति ऋतभुगिति । एवंविध एवात्मा गुणमयेन पटेन त्रिगुणाविद्यामयेनावरणेनात्मानं नित्यशुद्धत्वादिरूपमन्तर्धाय ऋतभुगवस्थित इत्यन्वयः । कर्मफलभोक्ता संसारीव भासमानो वर्तत इत्यर्थः । इतिशब्दः प्रतिवचनसमाप्तिद्योतनार्थः । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ७ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां द्वितीयः प्रपाठकः ॥

ते होचुर्भगवन् यद्येवमस्यात्मनो महिमानं सूचयसीत्यन्यो वा परःकोऽयमात्माख्यो योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवा-(१)च्योर्द्ध्वा वा गतिर्द्वन्द्वैरभिभूयमानः परिभ्रमति ॥ १ ॥

## अथ तृतीयः प्रपाठकः ।

नित्यशुद्ध एवात्मा त्रिगुणोपाधिप्रविष्ट कृतभुक् संसारीत्युक्तमुपश्रुत्यैतदसंभावयन्तो वालखिल्याः पप्रच्छुरित्याह । ते होचु ० परिभ्रमति" इति । ते वालखिल्याः ह किल ऊचुः, किं, हे भगवन्! यद्येवमस्यात्मनो महिमानं त्वं सूचयसि नित्यशुद्ध इत्यादिकं तर्ह्येवंविधस्य कृतभुक्त्वासम्भवादन्यो वास्मात् परो विलक्षणः वाशब्दः सम्भावनायाम्। तमेव प्रश्नपूर्वकं विशदयति, कोयमात्माख्य इति । जीवाख्य इत्यर्थः । योऽय प्रसिद्धोऽहमस्मीति सितादिकर्मफलैरभिभूयमानः क्लिष्यमानः, सद्योनिर्ब्राह्मणादियोनिः असद्योनिः श्वशूकरादियोनिः तामापद्यते आत्मत्वेनाभिपद्यते इत्येवंप्रकारेणावांच्या अवाची ऊर्द्ध्वा वा तत्तज्जन्मकर्मानुरूपा गतिः फलप्राप्तिर्यतोऽतो द्वन्द्वैः शीतोष्णमानापमानसुखदुःखादिभिरभिभूयमानः परिभ्रमतीति प्रसिद्धं शास्त्रानुभवसारिणामित्यर्थः । अतएकस्य(२) विरुद्धधर्मसंसर्गविरोधादन्यो वा कस्मात् संसार्यात्मा न भवेदिति मन्यामह इत्यभिप्रायः ॥ १ ॥

(१) अवाङ्स्योर्द्ध्वेति मूले लिखितं ।

(२) अत एव कस्य इति सो० पु० पा० ।

**अस्ति खल्वन्योऽपरो भूतात्माख्यो योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवाञ्च्योर्द्ध्वा वा गतिर्द्वन्द्वैरभिभूयमानः परिभ्रमतीत्यस्यो-**

यद्येकस्य विरुद्धधर्मसंसर्गविरोधादृतभुगन्यः स्यादिति मन्यध्वे तर्ह्यस्त्यन्य ऋतभुक् संसारी यो द्वन्द्वैरभिभूयते इति तावद् गृह्णीतेत्युत्तरमाह प्रजापतिः "अस्ति ० उपव्याख्यानं" इति। योऽयं सितासितैरित्यादि परिभ्रमतीत्यन्तेनोक्तः स नित्यशुद्धत्वादिलक्षणादात्मनोऽपरोऽन्योऽस्ति कोऽसौ भूतात्मा भूताभेदेनोपलभ्यमान इत्यर्थः। कोऽयं भूतात्मेति तत्राह तस्योपव्याख्यानं, तस्य भूतात्मनः स्पष्टव्याख्यानं प्रपञ्चनं, शृणुतेति शेषः। "पञ्चतन्मात्रा ० भूतात्मेत्युक्तं" इति। शब्दस्पर्शरूपरसगन्धाः सूक्ष्माः पञ्चतन्मात्राख्याः अव्याकृताख्यादविद्याशवलितादात्मनः सकाशात् क्रमेण जाता भूतशब्देनापञ्चीकृतपञ्चमहाभूतशब्देनोच्यन्ते वेदान्तेषु। अथानन्तरमेतान्येव परस्परानुप्रवेशेन पञ्चीकृतानि गुणगुणिभावेन परिणम्य स्थितानि पञ्चमहाभूतानि भूतशब्देनोच्यन्त इत्यर्थः। अथैवं सति तेषामुभयविधभूतानां यत् समुदयं यः समुदायः परिणामविशेषस्तच्छरीरमित्युक्तं वेदान्तेष्विति बोध्यम्। प्राणेन्द्रियान्तःकरणसहितसूक्ष्मभूतसमुदायो लिङ्गशरीरं, पञ्चीकृतपञ्चमहाभूतसमुदायः स्थूलं शरीरमित्युक्तमिति विभागः। एवं भूत-

पव्याख्यानम्। पञ्चतन्मात्रा भूतशब्देनोच्यन्ते अथ पञ्चमहाभूतानि भूतशब्देनोच्यन्तेऽथ तेषां यत् समुदयं तत् शरीरमित्युक्तमथ यो ह खलु वाव शरीर इत्युक्तं स भूतात्मेत्युक्तं। अथामृतोऽस्यात्मा[१] बिन्दुरिव

शब्दार्थं सकार्यमुक्त्वाऽऽत्मशब्दार्थमाहाथेति। अथैवं सम्पन्ने शरीरद्वयात्मना भूतजाते तस्मिञ्छरीरे यो ह खलु वाव य एव ह स्फुटं खलु निश्चये वावाऽहं ममेति रथित्वेन व्यवहर्तेत्युक्तं पूर्वं स भूतात्मेत्युक्तं वेदान्तेष्वित्यर्थः। तथाच वेदान्ताः [‘तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः,] इत्यादिना सृष्टिमुक्त्वा [‘तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्’] (तैत्ति० उ० ) इत्यादिकाः। तथा ‘तत्तेजोऽसृजत’ इत्यादिना भूतसूक्ष्मसृष्टिं प्रक्रम्य [‘सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि’] (छान्दो० उ० अ० ६) इति, तथा [‘आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्सईक्षत लोकान्नु सृजा इति स इमांल्लोकानसृजत’] इत्युपक्रम्य शेषे [‘स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत’] (ऐत०उ०) इति। एवं तत्र तत्र [‘स एष इह प्रविष्ट आनखाग्रेभ्यः’] इत्यादि श्रुतयः सन्ति शतशः, इहापि पुरस्तादेतदुक्तं ‘प्रजापतिर्वा एकोऽग्रेऽति-

(१) त्माद्विन्दुरिव इति मु० सो० पु० पा०।

पुष्करा इति स वा एषोऽभिभूतः प्राकृतैर्गुणैरिति । अथोऽभिभूतत्वात् सम्मूढत्वं प्रयातः सम्मूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौघैरुह्यमानः

ष्ठत्' इत्यारभ्य 'स वायुरिवात्मानं कृत्वाभ्यन्तरं प्राविशत्' इति । एतदेव पुनःस्पष्टीकरिष्यते । तथाच चिदात्मैव भूतसङ्घातमनुप्रविष्टो भूताभेदेन गृह्यमाण उपाधिप्रधानत्वाद्भूतात्मेति चिदात्मनो भेदेन व्यपदिश्यते चिदात्मा चोपाधिभ्यो विविच्य वेदान्तेष्वात्मा ब्रह्म चिन्मात्रं प्रज्ञानघन इत्यादिशब्दैर्भूतात्मनो भेदेन व्यपदिश्यते तदेवमस्यस्यैवात्मन औपाधिको भेद इति संसारिसंसारिभेदव्यवहारोऽनाद्यविद्यानिबन्धन उपपद्यत इति प्रकरणार्थः । इदानीं चिदात्मन एव भूतात्मत्वं चिदात्मस्वभावानुपमर्दनेति वुत्पादयति "अथामृतोऽस्यात्मा ० गुणैरिति" इति । अथैवमप्यस्य भूतात्मनोऽप्यमृतो ऽविकारः कूटस्थ आत्मा स्वरूपं पुष्करे पद्मपत्रेऽब्बिन्दुरिव नीरबिन्दुरिव तत्संश्लेषरहितोऽपि स वै एष आत्मा प्राकृतैर्गुणैः प्रकृतिविकारैः साभासमायाविकाररूपदेहद्वयलक्षणैरभिमानगृहीतैरभिभूतस्तिरस्कृतस्वभावावभास इत्यर्थः । यत एवं "अथोऽभि ० परिभ्रमति" इति । अथो अतः कारणात् सन्धिः छान्दसः, तदेवाहाभिभूतत्वात् प्राकृतैर्गुणैरेकीभूतत्वात् सम्मूढत्वमत्यन्ताविवेकित्वं प्रयातः प्राप्तवान्, तच्चेदं लिङ्गमुच्यते सम्मूढत्वादेव हेतोर्भगवन्तं नापश्यदिति

कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्र श्चाभिमानित्वं प्रयाता इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानं जालेनेव खचरः कृत-

---

सम्बन्धः न पश्यतीत्येतत्। स्वतःसिद्धालुप्तज्ञानैश्वर्यादिशक्तिसम्पन्नतयोपलक्षितश्चिदात्मा भगवान् तं न पश्यतीति सम्मूढत्वमस्यावगम्यत इत्यर्थः। तस्य दूरस्थत्वाददर्शनं नास्य सम्मूढत्वादिति शङ्कां वारयत्यात्मस्थमिति। स्वात्मनि सत्तास्फूर्त्तिरूपेण स्थितमित्यर्थः। कथमयं स्वात्मस्थ इत्यत आह प्रभुमिति, प्रकर्षेण भवत्यस्मादिति प्रभुर्भूतात्मन उपादानमधिष्ठानञ्चेत्यर्थः। अतएव कारयितारं नियन्तारं, कारणाधीनं हि कार्यमिति न्यायात्, कारणत्वादेव नियन्तेत्यर्थः। तथाच श्रुत्यन्तरं ['एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते'] (कौषी० अ० ३) इति। किञ्च गुणौघैः प्राकृतिकैर्देहेन्द्रियविषयलक्षणैरुह्यमान इतस्ततश्चाल्यमानः कलुषीकृतश्च नानावासनाकषायरञ्जितश्चेत्यर्थः, अतएव वासनाभिः प्रेर्यमाणतयाऽस्थिरः कथञ्चिदुत्पाद्यमानेऽपि विवेकविज्ञाने स्थैर्यहीनः अतश्चञ्चलः शुभविषयैकप्रवृत्तिनिष्ठारहित इत्यर्थः। किञ्च लुप्यमानश्चाञ्चल्यवशाद्विवेकज्ञानधर्मसञ्चयैर्लुप्यमानोऽत एव सस्पृहोऽप्राप्तेऽशक्यसम्पाद्येऽपि स्पृहावान् अत एव व्यग्रो हीनः सुखभोगक्षणमलभमान-

स्यानुफलैरभिभूयमानः सदसद्योनिमापद्यता इत्य-
वाङ्व्योर्द्ध्वा वा गतिर्द्वन्द्वैरभिभूयमानः परिभ्रमति ।
कतम एष इति तान् होवाचेति ॥ २ ॥

अथान्यत्राप्युक्तं यः कर्त्ता सोऽयं वै भूतात्मा करणैः

---

श्चेति यावत् । सर्वस्यापि विशेषणजातस्य मूलमिदमुच्यते । अभिमानित्वं प्रयात इति । इति शब्द इत्यमर्थे । कथमित्ये-तदाहाहमिति । अहं मनुष्यः कर्त्ता भोक्ता, स उ इति छेदः, उशब्दोऽप्यर्थ, सोऽपि परोऽप्यस्ति मादृशो मम मित्रं शत्रुरुदा-सीनो वा, इदमिति देहवाह्यं परिकल्प्य तच्च ममेति शोभना-ध्यासपुरःसरमात्मीयतयाभिमन्यते अर्थादशोभनाध्यासान्न ममेति च, एवं मन्यमानोऽभिमन्यमान आत्मना स्वेनैवात्मानं निबध्नाति । बन्धनमात्रे दृष्टान्तमाह जालेनेव खचर इति । पक्षीवेत्यर्थः । अथवा खचरः कोशकारो वृक्षकोटराकाशे चरणात् । स यथात्मनेव कोशं कृत्वा तेनात्मानं निबध्नाति तद्वदित्यर्थः । एवं कुर्वन् कृतस्य कर्मणः शुभाशुभलक्षणस्यानु पश्चादवश्यम्भा-विफलैः सुखदुःखैरभिभूयमानः परवशीक्रियमाणः पुनः सदसद्यो-निमापद्यता इत्यादि व्याख्यातम् । पुनरप्यस्य विशेषजिज्ञासया पृच्छन्ति "कतम एष इति" इति । उत्तरमुत्थापयति "तान् होवाचेति" इति ॥ २ ॥

भूतात्मनश्चिदात्मनश्च वस्तुतो यद्यभेदस्तर्हि कथं

कारयितान्तःपुरुषः । अथ यथाग्निनाऽयस्पिण्डो वाभिभूतः कर्तृभिर्हन्यमानो नानात्वमुपैत्येवं वाव खल्वसौ भूतात्मान्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैति । चतुर्जालं चतुर्दशविधं चतुरशीतिधा परि-

---

भूतात्मनि संसरति तदभिन्नश्चिदात्मा न संसारी भवेदिति पृष्टो दृष्टान्तेन व्यवस्थामुपपादयिष्यन्नुक्तावात्मानौ परामृशति "अथान्यत्राप्युक्तं ० पुरुषः" इति । अथैवमेवान्यत्रापि शाखान्तरेऽप्युक्तं किं यः कर्त्तास्मिञ्छरीरे सोऽयं वै भूतात्मा यस्तु करणैः सन्निधिसत्तामात्रेण स्वप्रेरितैः करणैः कारयिता सोऽन्तःपुरुषश्चिदात्मेति, एतदन्यत्राप्युक्तमित्यर्थः । अन्तःपुरुषव्याप्तस्य भूतात्मनो नानात्वापत्तिं सदृष्टान्तामाहान्तरपुरुषस्य स्वतो भेदशङ्काव्यावृत्तये "अथ यथा ० उपैति" इति । अथेदमुच्यते यथाग्निना प्रसिद्धेनाभिभूतो व्याप्तोऽयस्पिण्डो वा काष्ठादिपिण्डः सन्तप्तः कर्तृभिर्लोहकारादिभिर्हन्यमानस्ताड्यमानो नानात्वं विस्फुलिङ्गभावेनोपैति नानादिक्ष्वनेकधा विप्रसृतो भवतीत्यर्थः । एवं वाव एवमेवोक्तदृष्टान्तवत् खलु असौ भूतात्माऽन्तःपुरुषेणाभिभूतो व्याप्तो गुणैर्देहेन्द्रियान्तःकरणैर्गुणात्मकमायाकार्यैर्हन्यमानोऽवच्छिद्यमानो नानात्वमुपैति तत्तद्भूतसङ्घातभेदेन भिद्यत इत्यर्थः । नानाभावमेव वर्णयति "चतुर्जालं ० रूपं" इति । चत्वारि जालानि परि-

णतं भूतगणमेतद्वै नानात्वस्य रूपं। तानि ह वा एतानि गुणानि पुरुषेणेरितानि चक्रमिव मृत्पचेनेति[१]। अथ यथाऽयस्पिण्डे हन्यमाने नाग्निरभिभू-

च्छेदकानि यस्मिंस्तत्तथा। जरायुजाण्डजस्वेदजोद्भिज्जरूपैश्चतुर्भिर्जालैरवच्छिन्नमित्यर्थः। चतुर्दशविधं भूरादिचतुर्दशभोगस्थानप्रकारमित्यर्थः। पुनर्जरायुजादीनामवान्तरजातिभेदेन चतुरशीतिधा तावच्च तावतोऽप्यधिकं वा भेदेन परिणतमुपचितमित्यर्थः। किं तत् भूतगणं भूतानां गणोऽस्मिंस्तद्भूतगणं पञ्चमहाभूतसंहननं यदेवंविधमेतद्वै नानात्वस्य भेदस्य रूपं स्वरूपमित्यर्थः। उक्तस्य चराचरलक्षणस्य स्वतश्चेतनत्वशङ्कां व्यावर्त्तयंश्चिदात्मनोऽस्माद्भेदं सूचयति "तानि ह वा ० मृत्यवेनेति" इति। तानि जरायुजादिभेदेन चतुर्विधानि भूरादिभेदेन चतुर्दशविधानि च ह वै एतानि चतुरशीत्यादिप्रकाराणि गुण्यन्ते पुनः पुनरावर्तन्त इति गुणानि पुरुषेणान्तःस्थेनेरितानि मृत्पचेन कुलालेनेरितं चक्रमिव भ्रमन्तीति शेषः। इदानीं भूतात्मानुगतस्यापि चिदात्मनो भूतात्मगतावस्थादोषसंस्पर्शाभावं दृष्टान्तेनोपपादयन् संसारित्वासंसारित्वव्यवस्थामाह "अथ यथायस्पिण्डे ० संश्लिष्टत्वादिति" इति। अभिभूयति

---

(१) मृत्यवेनेति इति मु० सो० पु० पा०।

यत्येवं नाभिभूयत्यसौ पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति ॥ ३ ॥

अथान्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं संवृद्ध्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावनद्धं विण्मूत्रपित्तकफमज्जा-

---

अभिभूयते न हन्यत इत्यर्थः। न ह्यौष्ण्यप्रकाशस्वभावस्याग्नेः स्वतोऽवस्थाभेदो वक्रवर्तुलस्थूलसूक्ष्मत्वादिलक्षणोऽयस्पिण्डाद्युपाधिपरामर्शमन्तरेण निरूपणपथमवतरति। एवमेवासौ पुरुष अन्तरस्थिदात्मा नाभिभूयति नाभिभूयते भूतात्मगतावस्थाभिर्भेदविपर्यासलक्षणैर्न संस्पृश्यते, अत्राप्युपाधिपरामर्शमन्तरेण भेदविपर्यासयोरनिरूपणात्, अयं तु भूतात्माऽयःपिण्डाभेदेनाकारवत्तया गृह्यमाणाग्न्याभासवद्भूतसङ्घातोपसंश्लिष्टत्वात् तदात्माभिमानितयानुगतत्वादभिभूयत्यभिभूयते तदवस्थाभिरवस्थावान् भवतीत्यर्थः ॥ ३ ॥

यस्मादेवं देहाभिमाननिबन्धनमात्मनः संसारित्वं तस्माद्देहस्वभावालोचनया देहाभिमानत्यागः कार्योऽसंसारित्वायेति विवृण्वन् देहस्य बीभत्सागोचरतामाह "अथान्यत्राप्युक्तं ० इव वसुना" इति। प्रथमं मैथुनादेवोद्भूतं शुक्रशोणितबिन्दुरूपं क्रमेण निरये निरयतुल्ये मातुरुदरे संवृद्ध्युपेतमङ्गप्रत्यङ्गकेशनखलोमप्रकारैः परिव्यूढं, अथ नवमे दशमे वा ततोऽप्यधिके

**मेदोवसाभिरन्यैश्चामयैर्बहुभिः परिपूर्णं कोश इव वसुना ॥ ४ ॥**

**अथान्यत्राप्युक्तं सम्मोहो भयं विषादो निद्रा तन्द्री प्रमादो जरा शोकः क्षुत् पिपासा कार्पण्यं क्रोधो**

वा मासे सति मूत्रद्वारेण योनिरन्ध्रेण निष्क्रान्तमेवंविधमिदं शरीरं प्रसिद्धमित्यर्थः। अवनद्धं पिहितं अन्यैश्चामयैरुदरशूला-पस्मारादिभिर्बहुभिरसङ्ख्यातैः, कोशो भाण्डागारं, वसु धनं, प्रसिद्धार्थमन्यत् । निरयरूपेऽस्मिन् शरीरे विवेकिनाभिमानो न कार्य इत्यभिप्रायः ॥ ४ ॥

एवं स्थूलशरीरे वैराग्याय तत्त्वभावमुक्त्वा सूक्ष्मेऽपि शरीरे वैराग्याय तत्त्वभावमुपन्यस्यति "अथान्यत्राप्युक्तं सम्मोहो ० तामसानि" इति। सम्मोहो विपर्ययः। तन्द्री आलस्यं। प्रमादो ऽवश्यकर्तव्येष्ववधानशून्यता। जरा देहधर्मोऽप्यन्तःकरणेन जीर्णो-ऽहमित्यभिमानात् तद्धर्मान्तरनुक्रान्ता। कार्पण्यं कृपणत्वं सत्यां सम्पत्तौ कदर्यता।

"आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन्।
देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः" इति

स्मृतौ कदर्यलक्षणमुक्तं, स एवेह कृपणः, तस्य भावः कार्पण्यमित्यर्थः। नास्तिक्यं आमुष्मिके श्रेयसि निरये वा नास्तीति बुद्धिर्वेदाद्यनादरस्य। अज्ञानमपेक्षितार्थास्फूर्त्तिः। परर्द्धसहिष्णुत्वं

नास्तिक्यमज्ञानं मात्सर्यं नैष्कारुण्यं मूढत्वं निर्व्रीडत्वं निराकृतित्वमुद्धतत्वमसमत्वमिति तामसानि । अन्तस्तृष्णा स्नेहो रागो लोभो हिंसा रतिर्द्दिष्टिर्व्यावृतत्वमीर्ष्या ऽकाममस्थिरत्वं चलत्वं व्यग्रत्वं जिगीषाऽर्थो-

---

मात्सर्यम् । नैष्कारुण्यं नैष्ठुर्यम् । मूढत्वमविवेकित्वं विवेकराहित्यमिति यावत् । अतो न मोहेन पौनरुक्त्यम् । निर्व्रीडत्वं अकार्यकरणेऽनपत्रपत्वम् । निराकृतित्वं अनवस्थितस्वभावत्वम् । उद्धतत्वं साहसेषु निःशङ्कत्वम् । असमत्वं विषमबुद्धित्वम् । एतानि तामसानि तमोगुणोद्रेककृतानीत्यर्थः । अन्यत् प्रसिद्धार्थम् । राजसान्याह "अन्तस्तृष्णा ० आप्नोतीति" इति । अप्राप्येऽप्यर्थेऽभिलाषोऽन्तस्तृष्णा । अतस्तृष्णेति पाठे अतः परं राजसान्युच्यन्त इति योज्यम् । स्नेहः पुत्त्रदारादिषु ममत्वाभिनिवेशः । रागः तेष्वासक्तिरात्मत्वाभिमानः । लोभो लब्धेषु विषयेष्वलंबुद्ध्यभावः । हिंसा परपीडा । द्विष्टिर्द्वेषः । व्यावृतत्वं व्यावृताभिप्रायत्वं गूढाभिसन्धितेत्यर्थः । ईर्ष्या निरर्थकस्पर्द्धा । काम्यत इति कामः फलं तद्रहितं यथा स्यात् तथाऽस्थिरत्वं, चाञ्चल्यं, निरर्थकप्रवृत्तिमत्त्वमित्यर्थः । यद्वा आकाममाकामत्वं आ समन्तात् कामवत्त्वमसम्पूर्णकामत्वमित्यर्थः, अतएवास्थिरत्वमेकस्मिन्विषये स्थैर्यरहितत्वम् । चलत्वं चलचित्तत्वमगाम्भीर्यमिति यावत् । व्यग्रत्वं व्यसनिता । धनविद्यादिभिः परान् जेतुमिच्छा जिगीषा । अर्थस्य पशुऽधनक्षेत्रादेरुपार्जनं येन केनचनोपायेन

पार्जनं मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्गः शुक्लस्वरोऽन्नतमस्त्विति राजसान्येतैः परिपूर्ण एतैरभिभूता इत्ययं भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥ ५ ॥

इति मैत्र्युपनिषदि तृतीयः प्रपाठकः ॥

सम्पादनम् । तदर्थं मित्राणामुपकारिणामनुग्रहणं दानमानसत्कारैरनुसरणम् । परिग्रहावलम्बो गृहाश्रमोत्साहः । उत्तरं वाक्यद्वयं स्पष्टार्थम् । अभिष्वङ्गः प्रीत्यतिशयः । शुक्लस्वरोऽव्यक्तस्वरस्तद्वत्त्वमिति यावत् । अन्नतमो बकत्वः ख्यात्याद्युद्देशेनान्नदानपरत्वमित्यर्थः । तुशब्दः पूर्वोक्तात् तामसमाह्यवच्छेदार्थः । इत्येवंविधानि राजसानीत्यर्थः । एतैरित्यादिः स्पष्टार्थः । यस्मादेवं तामसैराजसैश्च धर्मैरभिव्याप्तोऽयं भूतात्मा तस्मात् तद्वासनावासिततया पुनः पुनर्नानारूपाण्याप्नोतीति । अभ्यासः प्रपाठकसमाप्तिद्योतनार्थः ॥ ५ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां

तृतीयः प्रपाठकः ।

ते ह खलु वावोर्ध्वरेतसोऽतिविस्मिता अभिसमेत्योचुर्भगवन्नमस्तेऽस्त्वनुशाधि त्वमस्माकं गतिरन्या न

---

## अथ चतुर्थः प्रपाठकः ।

पूर्वस्मिन् प्रपाठके एकस्यैव चिदात्मनो भूतात्मोपाध्यविवेकेन संसारित्वं तद्गतावस्थाभिरवस्थावत्त्वं नानात्वं चेत्येवमादिदोषसंसर्गो न स्वतः स्वतस्तु निर्धर्मको नित्यशुद्ध एवेति प्रतिपादितम् । तदेतदवधार्य भूतात्मभावोपमर्देन शुद्धात्मस्वभावावाप्त्युपायं जिज्ञासवो वालखिल्याः पृच्छन्तीत्याख्यायिकामेवानुसरन्ती श्रुतिर्मोक्षसाधनं तत्त्वज्ञानमन्तरङ्गबहिरङ्गसाधनोपेतमुपदेष्टुं प्रवर्तते। ज्ञातव्ये हि विषये निर्धारिते तज्ज्ञानोपायजिज्ञासावसर इति सङ्गतिमभिप्रेत्य तदर्थं गुरूपसत्तिं विदधाति "ते ह खलु० न विद्यता इति" इति । हशब्दः ऐतिह्यार्थः खलुशब्दो वाक्यालङ्कारार्थः । वावशब्दोऽवधारणार्थः । ऊर्ध्वरेतसः पूर्वोक्ता वालखिल्या ऋषयः । ते ह विस्मिताः, अवधारणस्याचान्वयः, किमिदमद्भुतमिव नित्यशुद्धश्चिदात्माऽस्मत्प्रत्यगात्मा सन्नपि परोक्ष इव शुद्धोऽप्यशुद्ध इव, अक्रियोऽपि सक्रिय इवेति विस्मिता एव सन्तः प्रजापतिं, गुरुमित्यध्याहारः, अभिसमेत्याभिमुखेन सम्यग्विधिपूर्वकमेत्य ऊचुरुक्तवन्तः । हे भगवन् ते तुभ्यं नमो नमनमिदमस्तु त्वमनुशाधि शनैः शिक्षय अस्माकमस्मानित्यर्थः। अथवास्मानिति पदमध्याहर्तव्यम् । अन्यान्

विद्यता इति। अस्य को विधिर्भूतात्मनो येनेदं हित्वात्मन्नेव सायुज्य[१] मुपैति तान् होवाचेति ॥ १ ॥

अथान्यत्राप्युक्तं महानदीषूर्मय इवानिवर्तकमस्य यत्पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्यो-

प्रार्थयध्वमिति चेन्नैवं वाच्यमित्यभिप्रेत्योचुरस्माकं लच्छिष्याणां गतिर्गन्तव्यं स्थानं अन्या त्वदन्या न विद्यतेऽतस्त्वामेव पृच्छाम इत्यर्थः। यदर्थमुपसन्नाः तमर्थं पृच्छन्तीत्याह "अस्य को विधिः ० होवाचेति" इति। अस्य प्रत्यक्षानुभवसिद्धस्य भूतात्मनो भूतसङ्घातमात्मत्वेनोपगतस्य को विधिर्विधानं कः प्रकारो येन विधिना उपायभूतेनेदं भूतात्मत्वं हित्वा विहाय आत्मन्नात्मनि चिदानन्दसत्स्वरूप एव पूर्णात्मनि सायोज्यं सायुज्यं सयुग्भावं भूतात्मत्वविलापनेनोपैति निरस्तोपाधितया स्वस्वरूपेऽवतिष्ठेत स को विधिस्तं विधिं नो ब्रूहीत्युक्तवन्त इत्यर्थः। तान् होवाचेत्युक्तार्थः ॥ १ ॥

एवं पृष्टः प्रजापतिः प्रथमं वैराग्यदार्ढ्याय भूतात्मनः स्वरूपमुपन्यस्यति यस्मिन्नासक्तः संश्चिदात्मा स्वं रूपं परमं पदं न जानाति तदिदं विचिन्त्यतां तावदिति। "अथान्यत्रा ० परं पदं" इति। अस्य भूतात्मनो यत् पुरा कृतं तद-

(१) सायोज्यमिति मु० सो० पु० पा०।

रागमनं सदसत्फलमयैः पाशैः पङ्गुरिव बद्धं बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्येव बहुभयावस्थं मदिरोन्मत्त इव मोहमदिरोन्मत्तं पाप्मना गृहीत

---

निवर्तकमित्यन्वयः नास्ति निवर्तकमस्येत्यनिवर्तकम्। पुराकृतं पुण्यापुण्यरूपं कर्म महानदीषूर्मय इव पुनः पुनरविच्छेदेन जायमानं यतो भोगेन क्षीयमाणमपि पुनः पुनः पुंसां क्रियमाणत्वान्नोद्वर्तेत, अतो ब्रह्मात्मज्ञानादन्यतो निवर्तकमस्य नास्तीत्यर्थः। तथा च श्रुतौ ["स हीदमन्नं पुनः पुनर्जनयते स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत ह"] इति ["भिद्यते हृदयग्रन्थिः" "नान्यः पन्था विद्यतेऽयनाय"] इति च। सत्कर्म वाऽऽत्मज्ञानं वा सम्पाद्योत्तरे वयसि कर्मक्षयं करिष्यामीत्याशा न कार्येत्याह समुद्रेति। अस्य भूतात्मनो मृत्योरागमनं मरणप्राप्तिः समुद्रस्योत्सर्पतो वेलेव वेलाधावनमिव, अनिच्छतोऽपि दुर्निवार्यमस्य मृत्योरागमनमित्यर्थः। यावज्जीवति तावत्यपि काले नेच्छया पुरुषार्थसाधनक्षममित्याह सदसदिति। तत्तत्कर्मोपदर्शितानेकसुखदुःखभोगवासनामयैः पाशैर्बद्धं निगडितं सत् पङ्गुरिव गमने स्वसाधनप्रवृत्तावक्षममित्यर्थः। तत्र हेतुमाह, यतो बन्धनस्थस्य बध्यतेऽस्मिन्निति बन्धनं बन्धनागारं तत्स्थस्येवास्वातन्त्र्यमस्य भवत्यतः पंगुरिवाकिञ्चित्करं भूतात्मस्वरूपमित्यर्थः। अतोऽत्र विश्वासो

**इव भ्राम्यमाणं महोरगदष्ट इव विषयदष्टं महान्धकारमिव रागान्धमिन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरममित्यथोक्तम् ।**

---

न कार्य इत्यर्थः । इतोऽपि न विश्वासः कार्यः, यतो यमस्य दण्डयितुर्विषये गोचरेऽवस्थितस्य यथा बहुविधं भयं तथा बहुभयाविष्टा अवस्था यस्य तत्तथोक्तं सर्वस्मादपि शङ्कितभयमित्यर्थः । भूतसङ्घातमभिमन्यमानस्य विवेकोद्गमोऽपि दुर्लभ इत्याह मदिरेति । मोहोऽविवेकः स्तब्धता, पाप्मना पापग्रहेण गृहीत इव भ्राम्यमाणं मदैवावशमित्यर्थः । यद्वा ग्रहगृहीत इव पाप्मना पापेन भ्राम्यमाणमिति योजना । विषयदष्टं वासनारूपेण विषयैराविष्टमित्यर्थः । महानन्धकारो यस्मिंस्तत् महान्धकारं निशीथं तद्वद्रागो विषयासक्तिः सोऽन्धकार इव हिताहितप्राप्तिपरिहारोपायावरणं तेनान्धमावृतमित्यर्थः । इदानीमस्मिन् सत्त्वबुद्धिरपि न कार्येत्याह इन्द्रजालमिवेति । मायाविनिर्मितहस्त्यादिवद् दृष्टनष्टस्वरूपत्वान्मायामयमित्यर्थः । तत्त्वज्ञानबाध्यत्वादपि नास्मिन् सत्त्वमवधेयमित्याह स्वप्न इवेति । मिथ्यादर्शनं बाध्यदर्शनमित्यर्थः । विमतं बाध्यज्ञानप्रतिभासं कादाचित्कत्वात् स्वप्नदृष्टवदित्यनुमानमुक्तं भवति । कदलीगर्भस्तदन्तःशलाका तद्वदिदमसारं

शब्दस्पर्शादयो ह्यर्था मर्त्येऽनर्था इवास्थिताः ।
येषां सक्तस्तु भूतात्मा न स्मरेत परं पदम् ॥ २ ॥

---

अल्पोपघातमप्यसहमानमित्यर्थः । प्रतिक्षणपरिणामादप्यविश्वास्य-मित्याह नट इवेति । यद्वा नानाजात्यभिव्यञ्जककर्मप्रभाव्य-नेकाकारपरिग्रहान्नट इव दुर्लक्ष्यमित्यर्थः । अस्मिन् सौकुमार्य-सौन्दर्यादिबुद्धिरपि न कार्येत्याह चित्रेति । मांसशोणितादिभि-र्बीभत्सितत्वान्न मनोरममित्यर्थः । तदुक्तं मनुना (अ० ६ । ७७ श्लो० ७६।७७) ।

"अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं भूतावासमिमं त्यजेत्" ॥ इति ।

इत्यथ एवमुक्तेऽर्थे, उक्तं श्लोकरूपं वचनमिति शेषः । शब्दस्पर्शादयो हि विषया अनर्था अपि मर्त्ये मरणधर्मिणि भूतात्मन्यर्था इव स्पृहणीया इवाऽऽस्थिताः अङ्गीकृताः न त्वेते स्पृहणीया इति योजना । कुत इत्यत आह, भूतात्मा येषां सक्तो येष्वासक्तस्तु परमं पदं वैष्णवं धाम न स्मरेत नानुस-न्दधीतेत्यर्थः । एवंविधं भूतात्मनः स्वरूपं ब्रह्मादिस्तम्बप-र्यन्तं समालोच्य तस्मिन्नभिमानस्त्याज्यः श्रेयोऽर्थिनेत्यभि-प्रायः ॥ २ ॥

**अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगमः स्वधर्मस्यानुचरणं स्वाश्रमेष्वेवानुक्रमणं स्वधर्मस्य वा एतद्व्रतं स्तम्बशाखेवापराण्यनेनोर्द्धभा-**

तदेवं वैराग्याय भूतात्मनः स्वरूपमुपवर्ण्येदानीमस्य त्यागोपायं पृष्टमुपदिशति "अयं ० निवर्त्तता इति" इति । अस्य भूतात्मनोऽयं वाव अयमेव खलु प्रतिविधिः प्रतिविधानं प्रतिक्रिया भूतात्मत्वप्रहाणोपायः । कोऽयं यद् योऽयं । वेदविद्याधिगमः, वेदद्वारा विद्याया आत्मतत्त्वविषयाया अधिगमः सम्यक्प्राप्तिरित्यर्थः । कथं विद्याधिगमो वेदादित्यपेक्षायां विविदिषन्ति यज्ञेनेत्यादिश्रुत्यन्तरविनियोगानुरोधेन स्ववर्णाश्रमविहितधर्मानुष्ठानप्रभावकृतस्वान्तशुद्धिं विना न ज्ञानाधिगम इत्यभिप्रायेणादौ बहिरङ्गानि कर्माणि विदधाति स्वधर्मस्येत्यादिना । स्वो धर्मः स्वधर्मः आवश्यकं कर्म तस्यानुचरणमनुक्रमेणानुष्ठानं, एतदेव स्पष्टयति स्वाश्रमेष्वेवेति । यस्य वर्णस्य यावन्त आश्रमा विहितास्तेष्वाश्रमेष्वेव विहितानां कर्मणां तेन तेन वर्णेनानुक्रमणमनुष्ठानमिति यदेतद्वै प्रसिद्धं स्वधर्मस्य व्रतं निष्ठा, अपराणि काम्यादीनि कर्माणि स्तम्बशाखेव तृणशलाकेव दृढानीत्यर्थः । एतदुक्तं भवति येन यच्छक्यं कर्तुं तन्न तस्य हितसाधनं किन्तु यस्य वर्णस्य यस्मिन्नाश्रमे यो धर्मो विहितः स तस्य हितसाधनं तेन सोऽनुष्ठेयः, काम्यादि

ग्भवत्यन्यथाऽवाङित्येष स्वधर्मोऽभिहितो यो वेदेषु न स्वधर्मातिक्रमेणाश्रमी भवत्याश्रमेष्वेवानवस्थस्तपस्वी

तु मुमुक्षुणा हेयमिति। अनेनोक्तप्रकारस्वधर्मानुष्ठानेन ऊर्द्ध्वभाक्, संसारमण्डलादुपरि यदसंसारि ब्रह्म तदूर्द्ध्वमुच्यते।

'ऊर्द्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन'॥

(कठो० ६) इति श्रुत्यन्तरात्। तदूर्द्ध्वं ब्रह्म भजत इत्यूर्द्ध्वभाक् ब्रह्मज्ञानवान् भवतीत्यर्थः। अन्यथा स्वधर्मातिक्रमणे काम्यकर्मनिष्ठायां वाऽवाङित्यधो नरकादिस्थानमर्वाचीनानेकानित्यपुरुषार्थं वा भजेतेत्यर्थः, संसारमण्डलान्न व्यावर्तत इत्यभिप्रायः। उपसंहरति एष स्वधर्मो यो वेदेष्वभिहितो वर्णाश्रमनिबन्धनो न काम्यादि स्वधर्म इत्यर्थः। यद्यपि काम्याद्यपि कर्म कामिनः स्वाभिलषितसाधनत्वात् स्वो धर्मो भवति तथापि न तत् स्वरूपाविर्भावहेतुरिति न मुख्यं तस्य स्वधर्मत्वम्। स्ववर्णाश्रममात्राधिकारकस्तु धर्मश्चित्तशुद्ध्यादिपरम्परया स्वस्वरूपाविर्भावहेतुरिति मुख्य इति भावः। उक्तमेवार्थं व्यतिरेकमुखेन द्रढयति, न स्वधर्मातिक्रमेणाश्रमी भवति। केवलं तत्तदाश्रमलिङ्गधारणमात्रादाश्रमी न भवति, तस्य स्वरूपतोऽपुरुषार्थत्वात् पुरुषार्थहेतुत्वाच्चेति भावः। ननु किमि-

**वेत्युच्यत इत्येतदयुक्तं नातपस्कस्यात्मज्ञानेऽधिगमः कर्मसिद्धिर्वेत्येवं ह्याह।**

त्येवमाश्रमधर्मेष्वतियत्नः क्रियते तपसैव ब्रह्मविद्योदयसम्भवात् "तपसा विन्दते" महदिति वचनादिति चेत्, सत्यं, तदप्याश्रमधर्माविरोध्येव साधनं न तद्विरुद्धमपीत्याशयेनाह आश्रमेष्वेवेति। आश्रमेष्वनवस्थ एवानाश्रमस्थ एव तपस्वी वा धार्मिको वेत्याद्युच्यते यत् तदेतदयुक्तमिति योजना। ननु तर्हि तत्र तत्रात्मज्ञानसाधनेषु 'तपसा ब्रह्म विजिज्ञासस्व' इत्यादि तपोविधानमनर्थकं, स्वधर्मानुष्ठानादेवात्मज्ञानसिद्धेरित्याशङ्कायामाह नातपस्कस्येति। अतपस्कस्य वैधकायशोषणरहितस्यात्मज्ञाने नाधिगमो नाधिगमनं आत्मज्ञानं न प्राप्नोतीत्यर्थः। न केवलमेतावत् किन्तु कर्मसिद्धिर्वा कर्मफललाभो वा तस्य न स्यादित्यर्थः। अस्मिन्नर्थे सम्मतिमिव श्लोकमुदाहरति, एवं ह्याहेति। तपसा स्वधर्माचरणेन तदविरोधिवैष्णवादिनिष्कामव्रतविशेषाचरणलक्षणेन च सत्त्वं सत्त्वगुणप्रधानं चित्तं प्राप्यते, विशुद्धसत्त्वता लभ्यत इत्यर्थः। तस्मात् सत्त्वान्मनः सम्प्राप्यते, मनुतेऽनेनेति मनो विवेकविज्ञानं, तस्मान्मनसो मननादात्मा पूर्णं तत्त्वं परं ब्रह्म हि निश्चितं प्राप्यते। आत्मतत्त्वसाक्षात्कार एवात्मप्राप्तिर्नान्या तस्याप्तिर्नित्याऽऽप्तस्वरूपत्वात्, अत आत्मसाक्षात्कारो भवतीत्यर्थः। कोऽयमात्मेत्यत आह

**तपसा प्राप्यते सत्त्वं सत्त्वात् सम्प्राप्यते मनः।**
**मनसः प्राप्यते ह्यात्मा यमाप्ता न निवर्तता इति॥३॥**

**अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीद् ब्रह्मद्वार-**

---

यमाप्ता प्राप्य साक्षात्कृत्य न निवर्तते पुनः संसारमण्डले भूतात्मभावाय नावर्तते मुच्यत इत्यर्थः॥ ३ ॥

इदानीमुक्तं साधनजातं राशित्रयमिव सम्पाद्योपायोपेय-भावेनात्मसाक्षात्कारे समुच्चयेन विधत्ते "अस्ति ० ब्रह्म" इति। यो ब्रह्मविद्याविद्ब्रह्मविषयां विद्यां श्रवणमननलक्षणां वेत्ति सोऽस्ति ब्रह्माऽखण्डसच्चिदानन्दात्मकं ब्रह्मास्तीत्यब्रवीत्, प्रमाण-युक्तिजन्यं ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनमित्युक्तवानित्यर्थः। तथाच श्रुत्यन्तरं ['अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते अस्तीत्ये-वोपलब्धव्यः'] (कठो॰ ६) इति। यस्तपसा पूर्वोक्तलक्षणेनापहत-पाप्मा विशुद्धसत्त्वः, सत्त्वे तदिदं तपो यथाव्याख्यातरूपं ब्रह्मद्वा-रमेव ब्रह्मप्राप्तिद्वारमारादुपकारकं भवतीत्याहेति मध्यग्रन्थयो-जना। यः पुनः सुयुक्तः सुतरामध्यात्मयोगनिरतः ओमित्यजस्रं चिन्तयति स एतच्चिन्तनालम्बनमोङ्काररूपं ब्रह्मणो महिमा माहात्म्यं आविर्भूतं ब्रह्म वै तदित्याहेति योजना। सर्वमर्थजातं वाचकशब्दसम्भिन्नत्वात् तस्मिन्नवगम्यमानं ततो न पृथगस्ति, वाचकशब्दभेदाश्च ['तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येव-मोङ्कारेण सर्वा वाक् संतृण्णा ओङ्कार एवेदं सर्वं'] (छान्दो॰अ॰२)

मिदमित्येवैतदाह यस्तपसापहतपाप्मा ॐ ब्रह्मणो महिमेत्येवैतदाह यः सुयुक्तोऽजस्रं चिन्तयति तस्मा-द्विद्यया तपसा चिन्तया चोपलभ्यते ब्रह्म। स

इति श्रुतेरोङ्कारान्नातिरिच्यन्ते। स चोङ्कारोऽपि स्फुरणावष्ट-म्भितत्वान्न ततोऽन्योऽस्ति, स्फुरणं च सर्वस्य नामरूपात्मकस्य ब्रह्मैव 'आत्मवास्य ज्योतिः' इति श्रुतेरात्मा च ब्रह्म 'अयमात्मा ब्रह्म' इति श्रुतेः। तथाच प्रणवेन ब्रह्मात्मानुसन्धानं ब्रह्मणः साक्षात् साक्षात्कारहेतुरिति प्रणवार्थानुसन्धाननिष्ठोऽब्रवी-दित्युक्तं भवति। एवं त्रिधा विभक्तं साधनमिदानीं समु-च्चित्य विधत्ते तस्मादिति। अत्र त्रयाणामेषामेकस्मिन् पुरुषे यौगपद्यासम्भवादवश्यम्भाविनि क्रमेऽग्निहोत्रयवागूपाकवदर्थक्रमो द्रष्टव्यः। तथाच प्रथमं तपस्ततो ब्रह्मविद्या श्रवणादिलक्षणा, ततः प्रणवैकनिष्ठतेति क्रमेण साधनत्रयवान् ब्रह्मोपलभेते-त्यर्थः। इदानीमुक्तसाधनत्रयातिशयवतः परमफलकथनपूर्वकं साधनत्रयविधेः प्राशस्त्याय ब्रह्मविदं स्तौति "स ब्रह्मणः ० ब्रह्मोपास्ते" इति। स एवं ध्यायन् विद्वान् ब्रह्मणोऽपरस्य हिरण्यगर्भाख्यस्य शब्दब्रह्मणो वा परः परस्तात्परं ब्रह्म एता गन्ता भवति परं ब्रह्मैव भवतीत्यर्थः। इदं मुख्यफलकथनम्। ['ब्रह्म वेद ब्रह्मैव भवति'] इत्यादि च श्रुत्यन्तरम्। तत् किं

ब्रह्मणः पर एता भवत्यधिदैवत्वं देवेभ्यश्चेत्यक्षय्यम-परिमितमनामयं सुखमश्नुते य एवंविद्वाननेन चि-

---

हिरण्यगर्भोऽन्योऽस्ति यस्मात्परमयमेतीत्याशङ्क्य नहि नहि सोऽप्ययमेवेत्याहाधिदैवत्वमिति। देवेभ्यश्च देवेभ्योऽप्यधि उपरि यद्दैवत्वं सर्वदेवाधिपतित्वं तदप्ययमेता भवतीति योजना। अश्नुत इति वक्ष्यमाणेन वान्वयः। इतिशब्दः प्रदर्शनार्थः। देवाश्चायमेव भवतीत्येवंविधमस्य माहात्म्यमित्यर्थः। किञ्चा-क्षय्यमविनाशि, अपरिमितमिति विशेषणमविनाशित्वसाधनं, यत् परिमितं देशतः कालतः स्वरूपतो वा परिच्छिन्नं तद्वि-नाशि दृष्टं यथा घटादि, इदन्तु तद्विपरीतत्वादक्षय्यमित्यर्थः। सांसारिकसुखवदस्य सातिशयत्वपारतन्त्र्यदुःखसम्भेदशङ्काव्यावृत्तये विशेषणमनामयमिति, एवम्भूतं यत्सुखं तदश्नुते प्राप्नोति भुङ्क्ते इति वा। क इत्यपेक्षायामाह य एवं विद्वाननेन चिकेण ब्रह्मोपास्ते स इत्यर्थः। पुनरपि फलान्तरमिव ब्रह्मसाक्षात्कार-नान्तरीयकामुपाधिनिवृत्तिमुपन्यस्यति "अथ यैः ० सायोज्य-मुपैति" इति। अथास्यामवस्थायामयं परिपूर्णः पूर्णात्मा सन्ना-त्मन्नेवात्मभूते ब्रह्मण्येव सायोज्यं सायुज्यमुपैतीति सम्बन्धः। सायुज्योपगमनप्रकारमाहावशिष्टैः पदैः ] यैर्भूतपरिणामैर्देहे-न्द्रियादिलक्षणैरयं विद्वान् पूर्वं परिभूत आत्मसात्कृतो रथि-तस्य रथं प्रापितो रथित्वं च प्रापित इति यावत् तैर्वै

केण ब्रह्मोपास्ते । अथ यैः परिपूर्णोऽभिभूतोऽयं रथितस्त्रैर्वैव मुक्तस्त्वात्मन्नेव सायोज्यमुपैति ॥ ४ ॥

ते होचुर्भगवन्नभिवाद्यसीत्यभिवाद्यसीति । निहितमस्माभिरेतद्यथावदुक्तं मनसीत्यथोत्तरं प्रश्नमनु-

तैर्भूतपरिणामैः, वा एवेति छेदः, वाशब्दोऽप्यर्थे, तैरपि मुक्त एवेत्यन्वयः । तुशब्दः पुनर्बन्धशङ्काव्यावृत्त्यर्थः । आत्मन्नेवेत्यादि व्याख्यातम् ॥ ४ ॥

एवमात्मानात्मनोस्तत्त्वमात्मतत्त्वब्रह्मज्ञानं च समाधनमुपश्रुत्य किं कृतवन्तो वालखिल्या इत्यपेक्षायां तद्वृत्तमनुवदन्ती श्रुतिर्लब्धविद्यैः शिष्यैर्गुरौ कर्तव्यमुपदिशति "ते होचुः ० अभिवाद्यसीति" इति । पुनर्वचनमादरार्थम् । अभिवादी अभिवदनशीलः आभिमुख्येन श्रोतॄणामनुभवपर्यन्तं तत्त्ववदनस्वभावोऽसि कृपयैव सर्वोपदेष्टासि नास्मद्गुणापेक्षयेत्यर्थः । एवं गुरुमभिपूज्य किं कृतवन्त इत्यपेक्षायां गुरूपदिष्टसर्वार्थावधारणोक्त्या न प्रमाद्यन्तः पुनः किञ्चिन्मनोगतं पृच्छन्ति ध्येयस्वरूपविप्रतिपत्तिनिरासेन मनःसमाधानार्थमित्याह "निहित ० ब्रूहीति" इति । हे भगवन् यदुक्तं भवता एतदस्माभिर्मनसि स्वचित्ते यथावदानुपूर्व्येण निहितं धृतं, अत्रास्माकं नास्ति संशय इत्यर्थः । अथ इदानीमुत्तरमितः परम-

ब्रूहीति। अग्निर्वायुरादित्यः कालो यः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्त्येकेऽन्यं श्रेयः कतमो यः सोऽस्माकं ब्रूहीति तान् होवाचेति ॥ ५ ॥

ब्रह्मणो वावैता अग्र्यास्तनवः परस्यामृतस्या-

---

स्माभिः करिष्यमाणं प्रश्नमनुब्रूहि अनुसृत्योत्तरं ब्रूहि कथये-त्यूचुरिति पूर्वेणान्वयः। कः प्रश्नः स पृच्छ्यतामित्युक्ता आहुः "अग्निः ० होवाचेति" इति। एके ध्यायिनोऽन्यमभिध्या-यन्ति अन्यमन्यमिति वीप्सा द्रष्टव्या, एकेऽग्न्यादीनामेकैकम-भिध्यायन्तीत्यर्थः। एके ऽन्यं परं ब्रह्म परमात्मेत्युच्यमा-नमर्थं ध्यायन्तीत्यर्थः। अत्र कतमः पक्षः श्रेयः श्रेष्ठः श्रेयस्कर इति वा। यः पक्षस्तवाभिमतः श्रेयस्त्वेन स एवास्माकं श्रेयान्। तमस्माकं त्वं ब्रूहीत्यपृच्छन्निति योजना। यद्वा स त्वं विजानन् यः श्रेष्ठः पक्षस्तमस्माकं ब्रूहीति योजना। तान् होवाचेति श्रुतिवचनमुक्तार्थम् ॥ ५ ॥

श्रेयोऽर्थिभिरग्न्यादयो वा प्रत्येकं पृथक् ध्येयाः परिपूर्णं ब्रह्म वा ध्येयमिति पृष्टः प्रजापतिः सर्वत्र ब्रह्मैव पररूपेण स्वरूपेण चोपास्यं श्रेयोऽर्थिभिर्नाग्न्यादिस्वरूपमेवोपास्यं तदुपास-नाया अल्पफलत्वादित्यभिप्रेत्याग्न्यादीनामपि न ब्रह्मणोऽर्थान्तर-त्वमस्तीति प्रतिपादयन्नुपासनाव्यवस्थामुपदिशतीत्याह "ब्रह्मणः ० ह्याह" इति। एता अग्न्यादिलक्षणा ब्रह्मणो वाव ब्रह्मण एवाग्र्याः

शरीरस्य तस्यैव लोके प्रतिमोदतीह यो यस्या-

श्रेष्ठास्तनवो मूर्तय', ब्रह्मैवाग्न्यादिरूपेण विभाव्यते, अतस्तेषु ब्रह्म-बुद्ध्योपासनं युक्तमिति भावः। किंलक्षणस्य ब्रह्मण इत्युच्यते परस्य। सर्वकारणस्य सर्वाधिष्ठानभूतस्येति यावत्। अतएवामृतस्य नित्यस्य, अशरीरस्याविर्भावतिरोभावधर्मवर्जितस्य ब्रह्मण एतास्तनव इति पूर्वेण सम्बन्धः। एवं चेद्यस्यैतास्तनवस्तदेव ब्रह्मोपास्यतामलं तद्दृष्ट्याऽन्योपासनयेत्यत आह तस्यैवेति। योऽर्थो देवो वाऽन्यो वा यस्य पुंसोऽनुषक्तोऽनुरागविषयीकृतस्तस्यैवेह लोके प्रतिमोदति प्रतिमोदते प्रतिमोदनं करोति सर्व इत्येवं लोकप्रसिद्धं ह्याहेत्यक्षरयोजना। यो यस्यानुरागयोग्योऽनुरज्यमानो वा तमेव लोकाः प्रीणयन्त्यनुसरन्तीति च प्रसिद्धं लोके। तथा च परस्य ब्रह्मणोऽगोचरत्वा।अर[illegible]-त्वात् तस्मिन् साक्षान्मनोनिरोधं कर्तुमशक्नुवतां प्रथममग्न्या-दिदेवतास्वेव यथारुचि ब्रह्मदृष्ट्योपासनं श्रुतिषूपदिश्यत इत्य-भिप्रायः। यद्वा तस्यैव ब्रह्मण इह लोके प्रतिमा मूर्तिरुदिति उदेत्यग्न्यादिरूपेण। तथाच योऽग्न्यादिर्यस्योपासकस्यानुषक्तः स तदेव ब्रह्म प्रतिमारूपमुपासीतेत्येवं ह्याहेति योजना। अग्न्या-दीनां देवानां ब्रह्माख्यतनुत्व[illegible]क्तं साधयति "ब्रह्म खल्विदं सर्वं" इति। इदं सर्वं ब्रह्म वाव ब्रह्मैव खल्वित्यन्वयः। तथाच श्रुत्यन्तरं ['सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत']

नुषक्त इत्येवं ह्याह। ब्रह्म खल्विदं वाव सर्वम्। या वाऽस्या अग्र्यास्तनवस्ता अभिध्यायेदर्चयेन्नि-

---

(छान्दो० ३०३) इति। अस्यार्थः। सर्वमिदमध्यात्ममधिदैवमधिभूतं वाऽशेषं जगद्ब्रह्मैव खलु नात्र संशयः कार्यः। कुत इत्यपेक्षायां हेतुमाह तज्जलानितीति। तस्माज्जायत इति तज्जं, तस्मिन् लीयत इति तल्लं, तेनानिति चेष्टत इति तदनम्। अम्लोपश्छान्दसः। इतिशब्दो हेत्वर्थः। तस्माद्ब्रह्मणो जातत्वात् तस्मिन्नेव लीयमानत्वात् तदाश्रयजीवनत्वाच्च तदेवेदं ब्रह्म यथामृत्सुवर्णाद्युत्पत्तिस्थितिलया घटकुण्डलादयो मृत्सुवर्णाद्यात्मकास्तथेमे तस्मात् तथेति। यद्यप्येवं सर्वमेव ब्रह्मणः शरीरं तथापि यत् स्वस्मादुत्कृष्टत्वेनाभिमतं तदुपास्यम्। देवा हि मनुष्याणामुत्कृष्टत्वेनाभिमता अन्नादयश्च जीवनहेतुत्वात् तथाऽभिमानयोग्या इत्यतस्ते ब्रह्मणोऽग्र्यास्तनव इति ब्रह्मदृष्ट्योपास्या इत्याह "या वास्या ० पुरुषस्य" इति। याः काश्चिद्वास्या वासयोग्या आश्रयार्हाः ब्रह्मणोऽग्र्यास्तनवोऽग्र्याः श्रेष्ठा अभिध्यायेत्। यद्वा अस्य ब्रह्मणो या वा याः कश्चिदग्र्यास्तनव इति योजना। अस्मिन् पक्षे दैर्घ्यविसर्गौ छान्दसौ। ता ब्रह्मबुद्ध्याऽभिध्यायेत्, अर्चयेत् पुष्पोपहारादिना पूजयेत् प्रतिमासु वा हृदये वा, निह्नुयाच्च तत्तदुपास्यदेवतात्माभिमानेनाध्यात्मपरिच्छेदाभिमानं स्वाभाविकं देवताया आत्मभावापादनेन हित्वा

ह्नुयाच्चातस्ताभिः सहैवोपर्युपरि लोकेषु चरत्यथ

पृथगग्न्यादिदेवतात्व च निह्नुयात् परित्यजेत्। चशब्दो ध्याना-र्चननिह्नवानां समुच्चयार्थः। तथाच श्रुत्यन्तरं ['तं यथोयथो पासते तदेव भवति'] इति। 'देवो भूत्वा देवानप्येति' [इति च। यत एवं देवतात्मभावनया ब्रह्मतनुभूता देवता उपास्ते, अतस्ताभिर्ब्रह्मतनुरूपदेवताभिः सहैव तदैकात्म्यं प्राप्येति यावत्। उपर्युपरि लोकेषु जनतपःसत्यलोकेषु चरति उपासनातार-तम्याल्लोकफलविकल्पः। तत्र तत्रोपासनाफलानि तत्तद्देवता-त्मना भुङ्क्ते इत्यर्थः। यद्ययं देवतात्ममात्रदृष्टिस्तदा भोगान्ते पुनरिहावर्तते, [''अप्रतीकालम्बनान्नयतीति बादरायण'' इति न्यायात्। अथ यदि ब्रह्मण्यहङ्ग्रहोपासकस्तदा कृत्स्नक्षये कृत्स्नस्य सर्वदेवतात्मनः सत्यलोकस्थस्य हिरण्यगर्भस्य क्षये अवसाने सम्पूर्णब्रह्मरूपः सन् पुरुषस्य पूर्णस्य परब्रह्मण एकत्वं सायुज्यमेति गच्छति क्रममुक्तिमुपैतीत्यर्थः। अभ्यासः प्रपाठक-समाप्त्यर्थः। अत्रेयं व्यवस्था। कार्यकारणोपाधिद्वयविलापनेन प्रत्यगेकरसतया ब्रह्म ध्यायत इहैव साक्षान्मुक्तिः, प्रारब्धफल-शेषभोगाय देहस्थितावपि स मुक्त एव। यः पुनः कार्य-कारणब्रह्मोपासकः स ब्रह्मण्यहङ्ग्रहाद्ब्रह्मलोकेऽर्चिरादिमार्गेण गत्वा तत्रोपासनफलभोगावसाने तत्रोत्पन्नसम्यक्तत्त्वज्ञानान्मुक्तिमुपैष्यती-त्यस्य क्रममुक्तिः। ये पुनः प्रतीकोपासका अन्नं ब्रह्म प्राणो

कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य ॥ ६ ॥

इति मैत्र्युपनिषदि चतुर्थः प्रपाठकः ।

---

ब्रह्म आदित्यो ब्रह्म मनो ब्रह्मेत्येवंदृष्टयस्तेषां, 'न प्रतीकेन हि स' इति न्यायेन, ब्रह्मक्रतोरभावात् ते यथोपासनं ब्रह्मलोकादर्वाक्तनेषु लोकेषु फलमनुभूय पुनरावर्तन्ते, ब्रह्मलोकं गता अपि केचित् पञ्चाग्निदर्शनादिनिष्ठा इति ॥ ६ ॥

इति श्रीरामतीर्थविरचितायां मैत्रीशाखोपनिषद्दीपिकायां चतुर्थः प्रपाठकः ।

अथ यथेयं कौत्सायनी स्तुतिः ।
त्वं ब्रह्मा त्वञ्च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ।
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥
त्वमन्नस्त्वं यमस्त्वं पृथिवी त्वं विश्वं[1] त्वमथाच्युतः ।
स्वार्थे स्वाभाविकेऽर्थे च बहुधा संस्थितिस्त्वयि ॥

## अथ पञ्चमः प्रपाठकः ।

तदेव समाधनां ब्रह्मविद्यामुपदिश्येदानीमुक्तवक्ष्यमाणसर्वोपासनाङ्गभूतान्नमस्कारमन्त्रानाह "अथ यथेयं ० स्तुतिः" इति । कुत्सायनेन दृष्टा कौत्सायनी इयं वक्ष्यमाणा स्तुतिः । स्तुतिरूपो मन्त्रगण आरभ्यते । अथशब्द आरम्भार्थः । यथोपलब्धा तथारभ्यत इत्यर्थः । "त्वं ब्रह्मा ० निधनाय च" इति । ब्रह्मा हिरण्यगर्भः प्रजापतिर्विराट् । अद्यते उपजीव्यते सर्वैरिति वा अत्ति सर्वं स्वात्मन्युपसंहरतीति वा अन्नं, अन्नवदाचरतीत्यन्नः । तथाच श्रुत्यन्तरं ['अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यते'] इति (तैत्ति० उ०) । विश्वं चराचरम् । अथ च सर्वात्मकत्वेऽपि त्वमच्युतोऽप्रच्युतनिजस्वभावः कूटस्थ एवेत्यर्थः । स्वार्थः पुरुषार्थो धर्मादिचतुष्टयरूपः स्वाभाविकः प्राकृतिकः स्वस्वप्रकृत्यनुसार्यर्थस्तयोरुभयोर्निमित्तं लोकस्य त्वयि ब्रह्मणीश्वरे बहुधा संस्थितिर्नानामार्गेण त्वन्निष्ठता भवतीत्यर्थः । अथवा स्वार्थे स्वाभाविकेऽर्थे च लोकस्य या संस्थितिः प्रवृत्त्यादिनिष्ठा सा त्वय्यायते-

(१) खमिति पाठान्तरम्

विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।
विश्वभुग्विश्वमायुस्त्वं विश्वक्रीडारतिप्रभुः ॥
नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ।
अचिन्त्यायाप्रमेयाय अनादिनिधनाय च ॥ १ ॥

---

त्यर्थः । विश्वस्येष्टे इति विश्वेश्वरस्तस्य संबुद्धिः । तर्हि विश्वमन्यदिति शङ्कायामाह विश्वात्मेति । त्वमेव विश्वमित्यर्थः । यतो विश्वकर्मकृत् क्रियते तत्कर्म विश्वाख्यं कर्म कार्यं करोतीति विश्वकर्मकृत् । विश्वोपादानत्वाद्विश्वात्मेत्यर्थः । यद्वा विश्वेश्वरत्वे हेतुर्विश्वात्मेति । विश्वस्यात्मा स्वरूप तत्रापि हेतुर्विश्वकर्मकृदिति । अतः कारणत्वात् स्वकार्यं विश्वं व्याप्य तन्नियमयन्नवस्थितो विश्वेश्वर इत्यर्थः । भोक्तारो जीवा अन्ये भविष्यन्तीति शङ्कां वारयति विश्वभुगिति । यो विश्वस्य भोक्ता प्रसिद्धः सोऽपि त्वमेवेत्यर्थः । किञ्च त्वमेव विश्वमायुः सर्वस्य सर्वमायुर्जीवन प्राणरूपेण वा सर्वायुः । तथाच श्रुत्यन्तरं [‘यावद्धस्मिञ्छरीरे प्राणो वसति तावदायुः’ (कौषी०अ० ३)] इति । किं बहुना त्वमेव विश्वक्रीडारत्योः प्रभुः बाह्योपकरणा प्रीतिः क्रीडा, तन्निरपेक्षा आन्तरप्रीतीरतिः । तयोस्त्वमेव स्वतन्त्रः समर्थ इत्यर्थः । शान्तात्मने कूटस्थस्वरूपाय गुह्यतमाय वाचामगोचराय अचिन्त्यायान्तरिन्द्रियाविषयाय अप्रमेयाय बाह्येन्द्रियाविषयाय अनादिनिधनाय नित्यसद्रूपायेत्यर्थः । चकारात् स्वयम्प्रकाशाय चेत्यर्थः । इतिशब्दोमन्त्रसमाप्त्यर्थः ॥ १ ॥

तमो वा इदमग्र आसीदेकं तत् परे स्यात् तत्तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वै रजस्तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवे-

मन्त्राणामारम्भे त्वं ब्रह्मा त्वं च वै विष्णुरित्यादिना ब्रह्मादिदेवतात्मत्वं प्रत्यग्ब्रह्मण उक्तं तत्र ब्रह्मादीनां तत्त्वान्तरत्वात् कथमित्थं स्तुतिरिति शङ्कानिरासायोत्तरा श्रुतिः प्रवर्तते । तत्रैक एव यथोक्तश्चिदात्मा स्वमायागुणैस्तदवस्थाभेदैश्चानेकोऽनेकविशेषोऽनेकविधक्रियाप्रवर्तको न तत्त्वभेदः काप्यस्तीति दर्शयन्ती श्रुतिर्ब्रह्मादित्रिमूर्तिभावेनास्यात्मन उपासन विधातुं प्रथमं मूर्तित्रयव्यपदेशनिमित्तमाह "तमो वा ० तनवः" इति । इद ब्रह्मविष्णुरुद्रादिकमग्रे सृष्ट्युपक्रमात्प्राक् तमो वै तम एव तमोगुणप्रधानमायामात्रमेवासीदेकमेकीभूतमनभिव्यक्तनामरूपमखण्डतमोमात्रमासीदित्यर्थः । एतेनासत्कारणवादोऽसत्कार्यवादश्च व्युदस्तः इदं तम इति सामानाधिकरण्योक्तेरग्र आसीदिति सत्त्वोक्तेश्च । तत् किं साङ्ख्याभिमतं प्रधान नेत्याह तत्परे स्यादिति । तत् तमः परे कार्यकारणत्वातीते तत्कल्पनाधिष्ठाने चिदात्मनि स्याद्भवतीति यावत्, अचेतनस्य तस्य स्वातन्त्र्यानुपपत्तेरित्यर्थः । एवं जगतः प्रागवस्थां चेतनपराधीनामुक्त्वा तत्प्रवृत्तेरपि तदधीनतामाह तत्परेणेति । तत् कारण प्रविलीनकार्यावस्थं तमः

रितं रसः सम्प्रास्रवत् सोऽंशोयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वेत्यस्य प्रागुक्ता एतास्तनवः। अथ यो ह

---

परेण चिदात्मनाऽधिष्ठानभूतेनेरितं प्रेरितं तच्चैतन्याभासव्याप्त्योपचितं बीजमिव सलिलादिव्याप्त्येत्यर्थः। विषमत्वं पूर्वावस्थाप्रच्युतिरूपमुच्छूनमिव बीजं साम्यावस्थात्यागेन तद्विलक्षणत्वं प्रयाति कार्योन्मुखं भवतीत्यर्थः। यद्यपि मायाव्याकृताविद्यादिशब्दवाच्यस्य कारणस्य नित्यैव चैतन्यव्याप्तिर्नित्यमेव तत्राध्यस्तत्वात्, तथापि सुषुप्तस्य स्वप्नादिवृत्त्युद्भववदबुद्धिपूर्विकैव कादाचित्की विद्याकर्मपूर्वप्रज्ञानुसारिणी चिदाभासव्याप्तिर्भवतीति न सृष्ट्यादिसान्तत्वशङ्कावकाश इति गमयितव्यम्। यद्दिदं परेरितस्य तमसो विषमत्वगमनमेतद्रूपं वै प्रसिद्धं रजो रजोगुणाख्यं कारणमित्यर्थः। तत्खलु रजः पूर्ववत् परेणेरितं सत्, विषमत्व प्रयाति। यदिदं रजसो विषमत्वगमनमेतद्वै सत्त्वस्य सत्त्वगुणप्रधानकारणस्य रूपं प्रकारभेद इत्यर्थः। एवं गुणवैषम्यं सनिमित्तं कारणव्यापारमुक्त्वा तस्य कार्याकारपरिणामप्रकारमाह तत्सत्त्वमेवेति। तत्परेणात्मना पूर्ववदीरितं सत्त्वमेव न तमोरजसी तयोर्वक्ष्यमाणार्थाभिव्यञ्जकत्वासामर्थ्यात् रसः सारश्चिदानन्दप्रकाशः [‘रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति’ (तैत्ति० उ०)] इति श्रुत्यन्तरात्। स सम्प्रास्रवत् सम्यक् प्राकट्येनास्रवत्। सत्त्वमेव चिदात्मनो विशेषाकाराभि-

खलु वावास्य तामसोऽंशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वावास्य राजसोऽंशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माथ यो ह खलु वावास्य सात्त्विकोां-

---

व्यक्तियोग्याकारतया प्रसृतं सच्चिदात्माकारमेव विप्रसृतमित्यर्थः । अयमेव हि तत्र तत्र बुद्धिरिति च महानिति चाहमवभास्य इति च द्रष्टेति चाख्यायते, नान्य इत्यभिप्रेत्याह सोऽंश इति । सोऽयमंशोऽंश इवांशश्चिदात्मनो विशेषावस्था आकाशस्येव दारुसुषिराद्यवस्था । नतु निरवयवस्य परमार्थतोऽंशोऽस्ति । कोऽसौ यश्चेतामात्रः चेता चेतना साक्षिचैतन्यं तया सीयतेऽवभास्यत इति चेतामात्रः स्वप्रकाशसाक्षिमात्रेणानुभाव्य इत्यर्थः । यतः प्रतिपुरुषः प्रतिविम्बो नानोदपात्रेष्विव सूर्यादिर्नानाविधार्थाकारबुद्धिवृत्तिषु विभाव्यमानत्वात् प्रतिपुरुष इत्यर्थः । लौकिकप्रतिबिम्बवदचैतन्यं वारयति क्षेत्रज्ञ इति । क्षेत्रं शरीरं धर्माधर्मबीजप्ररोहभूमित्वात् तदापादतलमस्तकमहमिति जानातीति क्षेत्रज्ञो जीव इत्यर्थः । तदुक्तं भगवता श्रीकृष्णेन,—

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः" इति ।

तत्सद्भावं साधयति सङ्कल्पेति । सङ्कल्प इदं मया कर्तव्यमित्येवमाकारो मनसो विकारः, अध्यवसायः कर्तव्यविषयस्वरूपसाधनफलानां यथावदवधारणरूपा बुद्धिवृत्तिः, अभिमानोऽहमस्मिन् ममर्थ इत्याद्यहङ्कारः । एतेषामचेतने सृत-

ऽश्रोऽसौ स ब्रह्मचारिणो योऽयं विष्णुः स वा एष

शरीरेऽदर्शनाज्जीवच्छरीरे च दर्शनादेतानि लिङ्गानि शरीरातिरिक्ततया सद्भावप्रमापकाणि यस्य स सङ्कल्पाध्यवसायाभिमानलिङ्गः। एतैर्लिङ्गैर्देहादिविलक्षणोऽस्तीति सम्भाव्यमान इत्यर्थः। प्रजापतिः समष्टिवैराजपिण्डाभिमानी देवः, विश्वो व्यष्टिपिण्डाभिमानिनी देवता, इत्येवमाद्या एताः प्रागुक्ता अस्यैव क्षेत्रज्ञस्य सत्त्वपरिणामप्रतिबिम्बितस्य चिदात्मनस्तनवः, चिदात्मैव तत्तन्मूर्तिभेदेषु तत्तदात्मना विभाव्यमानोऽवतिष्ठते, नास्मात् तत्त्वान्तरभूतं किञ्चिदित्यर्थः। तथाच श्रुत्यन्तरं [ 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतः' ] (बृहदा० अ० ५) इति। एतदुक्तं भवति किं कारणं ब्रह्मेति ब्रह्मवादिनां ब्रह्मणः सहकारिभूतजगत्कारणविमर्शे [ 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढां' ] इति त्रिगुणात्मिका मायाख्या शक्तिरवधृता श्वेताश्वतराणां मन्त्रोपनिषदि। सा च ब्रह्मणः सर्वकारणत्वनिर्वोढ्री शक्तिस्तेनाधिष्ठीयमाना गुणत्रयविभागेन यदा विकृता भवति तदा तदधिष्ठाताऽपि तत्सत्तास्फूर्तिप्रदत्वेन तदनुगतो विकृत इव भवति। तत्र च यथाविकारव्यपदेशं सोऽपि व्यपदिश्यते, तत्रापि त्रिगुणात्मकेन कारणेनेश्वरान्तर्याम्यादिशब्दैर्व्यपदिश्यमानः सत्त्वादीनामेकैकप्राधान्येन ब्रह्मादिसञ्ज्ञाभाग्भवति। तदा तत्रा-

**एकस्त्रिधा भूतोऽष्टधैकादशधा द्वादशधाऽपरिमितधा**

विर्भूतगुणविशेषवत्तया स उपास्यो व्यपदिश्यते गुणकार्यस्थूल-सूक्ष्मशरीरोपाध्यविशेषेण तदभिमानेन वा व्यवह्रियमाणो जीवः क्षेत्रज्ञः संसारी देवो मनुष्यस्तिर्यङ् स्थावर इति च व्यपदेश-भाग्भवति। अत्र सर्वत्र सत्त्वगुणपरिणामे एव चिदात्मनो विशेषाभिव्यक्तिर्नान्यत्र। सत्त्वस्य च रजस्तमःसम्पर्कविशेषाविशे-षाभ्यां चिदात्माविर्भावविशेषतारतम्यात् ज्ञानक्रियाशक्त्यैश्वर्यतार-तम्येन सर्वज्ञमूढामूढत्वादितारतम्यावभास इति। एतमेवाभिप्रायं विशदयति "अथ यो ह खलु ० अन्तर्बहिश्च" इति। अथ एवं प्रकारे व्यवस्थिते सति अस्यात्मनो यो ह खल्वित्थं वाव एव य एवेति सम्बन्धः। तामसस्तमःप्रधानोऽंशस्तमउपाधिको विशेषः असौ सः, हे ब्रह्मचारिणः, कोऽसौ योऽयं रुद्रः प्रसिद्ध इत्यर्थः। एवमुत्तरयोरपि पर्याययोर्व्याख्या। स वा एष एकः स वै पूर्वमुपपादितः एष इदानीमुपाध्यधिष्ठातृत्वेनोक्त एक एव रुद्रब्रह्मविष्ण्वात्मना त्रिधाभूतः कारणोपाधिमधि-ष्ठाय त्रिधाभूत इत्यर्थः। अष्टधा पञ्चविधप्राणादित्यौ मनश्चन्द्र-श्चन्द्रश्चेति त्रयः पञ्च भूतानि चेत्यष्टधेत्यर्थः। एकादशेन्द्रियभेदं एकादशधा, तत्रैव मनोबुद्ध्योर्भेदे सति द्वादशधा। तत्तदि-न्द्रियवृत्तीनामनन्तत्वात् तद्भेदेनापरिमितधा, वाशब्दो विक-ल्पार्थः। अध्यात्मं नाधिभूतं वाधिदैवं वा यद्यत् किञ्चिदस्ति तत्सर्वमवभासयंस्तत्तदात्मना नानाविध उद्भूतोऽभिव्यक्त उद्भूतत्वा-

**वोद्भूत उद्भूतत्वाद्भूतं भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूवा(१) इत्यसा आत्मान्तर्बहिश्चान्तर्बहिश्च ॥ २ ॥**

## इति मैत्र्युपनिषदि पञ्चमः प्रपाठकः।

देव भूत भूतसञ्ज्ञ आत्मा भवतीत्यर्थः, ['महद्भूतमनन्तमपारं' (बृहदा० आ० ४)] इति श्रुतेः, ['एको विष्णुर्महद्भूतं'] इति स्मृतेश्च। यतो भूतेषु प्रविष्टो भूतावभासकतया भूतनियन्तृतया चानुगतश्च चरति गच्छति भूतानि व्याप्नोत्यत उद्भूतत्वाद्भूतमिति योजना। अतएव भूतवशितया भूतानामधिपतिर्बभूवाधिष्ठाय पालयिताऽभवद्व्यवहारदृष्ट्येत्यर्थः। उपसंहारार्थ उत्तरो भागः। इत्येवमुक्तप्रकारेणासा असौ आत्मा यथाव्याख्यातोऽन्तःसाक्षिप्रमातृकर्त्रादिरूपेण बहिरीश्वरकालदेवतादिरूपेण विभाव्यते नान्य इत्यर्थः। अभ्यास आदरार्थः प्रपाठकसमाप्त्यर्थो वा ॥ २ ॥

इति श्रीरामतीर्थविरचितायां मैत्र्युपनिषद्दीपिकायां
पञ्चमः प्रपाठकः ॥ ० ॥

---

(१) बभूवेत्यसा इति पु० पा०

द्विधा वा एष आत्मानं बिभर्त्ययं यः प्राणो यश्चा-
सा आदित्योऽथ द्वौ वा एता अस्य पन्थाना अन्त-

## अथ षष्ठः प्रपाठकः ।

योऽन्तर्बहिः सर्वजनेषु नित्यं चरत्यशान्तेषु सुशान्तरूपः ।
प्राणात्मनान्तर्बहिरंशुमालिरूपेण तस्मै सततं नमोऽस्तु ॥
नमो गुरुभ्यः सर्वेभ्यो येषां चरणसंस्मृतिः ।
मद्दौपनिषदे शुद्धे तत्त्वेऽर्पयति मे धियम् ॥

एवमियता ग्रन्थसन्दर्भेण चिदात्मैक एव प्रत्यग्ब्रह्मरूपेण विज्ञेयः स एव ब्रह्मादिरूपेणानेकविशेषावस्थो ध्येयश्चेति मुमुक्षपेक्षितोऽर्थः सर्वो दर्शितो मुक्तिश्च चिदात्मसायुज्यप्राप्तिरभिहिता । इदानीमस्यैव चिदात्मनोऽनेकधोपास्यत्वायानेकमहिमानमाविष्कुर्वती श्रुतिर्मन्दमध्यमाधिकारिविषयास्तदुपासनाः सालम्बना अनेकप्रकारा विधातुं प्रवृत्त उत्तरेण प्रपाठकेन तत्त्वज्ञाननिष्ठापेक्षितानि साधनान्यपि कानिचिद्विधातुम् । अस्य च खिलत्वाच्चातीवाच मन्दतयोऽपेक्ष्यन्ते तथापि यथामति सङ्गतिमूहमाना अक्षराणि व्याख्यास्यामः । तत्राऽध्यात्माधिभूतदेहब्रह्माण्डोपाधिभ्यां चिदात्मनः क्रियाशक्तिप्रधानलिङ्गानुगतचिदाभासाभेदेन प्राण आदित्यश्चेति द्विधा भेदं प्रकल्प्य तेनात्मनोपासनं विधातुमाह "द्विधा वा एष ० व्यावर्तते" इति । एष पूर्वप्रकृत आत्मा, वै प्रसिद्धः

**बहिश्चाऽहोरात्रेणैतौ व्यावर्तेते। असौ वा आदित्यो बहिरात्मान्तरात्मा प्राणोऽतो बहिरात्मक्या**

---

सर्वश्रुतिषु, द्विधा द्विप्रकारेण आत्मानं स्वं रूपं बिभर्ति धत्ते पालयति वा। प्रकारभेदमेव विशदयति यः प्राणो देहे पञ्चधात्मानं विभज्य स्थितोऽस्तीयमेका विधा, यश्चासौ ब्रह्माण्डकरण्डमध्ये जगदवभासकतयावस्थितोऽस्ति आदित्यः सोऽयमपरा विधेत्यर्थः। अध्यात्मं प्राणात्मना अधिदैवमादित्यात्मना च ब्रह्मरूपः चिदात्मा ध्येय इत्युपासनोत्पत्तिविधिं सूचयन्नाह अथेति। अथेदमुच्यते अस्यात्मन एतौ द्वौ पन्थानौ विशेषाभिव्यक्तिमार्गौ। कौ। अन्तर्देहाभ्यन्तरं बहिश्च देहादध्यात्मरूपाद्बाह्यो देशश्चेति द्वौ पन्थानावित्यर्थः। एतौ प्राणादित्यौ अहोरात्रेण अह्ना रात्र्या च व्यावर्तेते विपरिवर्तनं कुर्वाते इत्यर्थः। अन्तः किंरूपो बहिश्च किंरूपो व्यावर्तेते कथञ्च तद्व्यावर्तनमित्येतद्विशदयति "असौ वा आदित्यो ० गतिरित्येवं ह्याह" इति। असौ प्रसिद्धो वै आदित्यः सूर्यो बहिरात्मा प्राणोऽन्तरात्मा यत एवमतो बहिरात्मन इयं बहिरात्मकी तत्प्रयुक्तेति यावत्, तया बहिरात्मक्या गत्या परिवर्तनेनान्तरात्मनः प्राणस्य गतिरनुमीयत इत्येवमेवंप्रकारं हि यत आह आगमज्ञोऽतोऽनयोर्न वास्तवो भेद इति शेषः। अयमाशयः, सूर्यो हि मेरुं प्रदक्षिणी-

**गत्यान्तरात्मनोऽनुमीयते गसिरित्येवं ह्याहाथ यः कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठा**

कुर्वन्नहोरात्राभ्यां ब्रह्माण्डान्तः परिवर्तते प्राणोऽपि श्वासरूपेण देहान्तः परिभ्रमति, तत्रैकाहोरात्रसूर्यगत्योः प्राणस्यैकविंशति-सहस्रसङ्ख्याः श्वासा भवन्तीत्यागमशास्त्रसिद्धं प्राणपरिवर्तन-मनुमीयते, यद्वा शतसंवत्सरपरिमितं हि पुरुषायुः [ 'शतायुर्वै पुरुषः शतेन्द्रियः' ] इति श्रुतिसिद्धेः । तावत्कालं च प्राणः शरीरान्तः सञ्चरति, तत्रैकद्वित्रादिवर्षप्राणसञ्चरणपरिच्छेद आदित्यपरिवर्तनप्रचयाधीन इति तद्गत्या प्राणगतिरनुमीयत इति । इदानीमन्तरात्मगत्या बहिरात्मगत्यनुमानप्रकारमाह अथ य इति । अथशब्दः पर्यायान्तरारम्भार्थः । यः कश्चिद्विद्वान् प्राणादित्यात्मदर्शी अतएवापहतपाप्मा अध्यात्मपरिच्छेदाभि-मानासङ्करूपपाप्मना रहितोऽत एवाऽत्राध्यक्ष इन्द्रियाध्यक्षस्तेषु स्वतन्त्रो नेन्द्रियपरवश इत्यर्थः । अतएवावदातमनाः निर्मल-चित्तः, तन्निष्ठस्तस्मिन्नुपास्ये निष्ठा तात्पर्यं यस्य स तन्निष्ठः सन्नावृत्तचक्षुर्बाह्यविषयव्यावृत्तेन्द्रियः स उ इति छेदः स एव तेनेति विपरिणेयम् । य एवंविधो विद्वान् तेनैवान्तरा-त्मिकया गत्या प्राणगत्या बहिरात्मन आदित्यस्य गतिरनुमीयत इत्येवं ह्याहेति व्याख्यातम् । एतदुक्तं भवति, अध्यात्माधिभू-तयोः पिण्डब्रह्माण्डयोः स्वस्वमानेन शतं वर्षाण्यायुःप्रमाण-

# आवृत्तचक्षुः सो अन्तरात्मक्या गत्या बहिरात्मनोऽनुमीयते गतिरित्येवं ह्याह । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो यः पश्यतीमां हिरण्यव-

---

मित्यस्य ममत्वाद्ध्यात्मगतप्राणात्मगत्या शतवर्षान्ते पिण्डपरित्यागलक्षणया बहिरात्मनोऽप्यादित्यस्य ब्रह्माण्डपिण्डपरित्यागरूपा गतिस्तन्मानेन शतवर्षान्ते भवेदित्यनुमीयते इति । अथवा या प्राणात्मनो गतिर्देहधारणलक्षणा प्राणापानव्यापारैः क्रियमाणा तया बाह्यात्मन आदित्यस्य ब्रह्माण्डविधारणरूपोदयास्तमयनिर्वर्त्याहोरात्रव्यापारैः क्रियमाणा गतिरनुमीयते एतच्च प्राकृतजनबुद्ध्यगोचरत्वाद्विद्वद्दृष्टिगम्यत्वमभिप्रेत्य विद्वान्मध्ये निर्दिष्ट इति द्रष्टव्यम् । एतयोरन्यतरस्य गत्याऽन्यतरस्य गत्यनुमानोपदेशस्तयोरेकगतित्वचिन्तनार्थ इति । इदानीमनयोः स्थानभेद गुणभेदञ्च सिद्धवदनूद्य व्यतिहारं तच्चिन्तनार्थं विधत्ते "अथ य एषोऽन्तरादित्ये ० एवाश्रितोऽन्नमत्ति" इति । गुणान्तरविधानारम्भार्थोऽथशब्दः । य एष प्रसिद्धोऽन्तरादित्ये आदित्याख्यस्य मण्डलस्य मध्ये हिरण्मयो हिरण्मय इव हिरण्मयो ज्योतिर्मयोऽन्तर्यामी पुरुषः पुरुषाकारादित्यदेवतान्तरनुप्रवेशेन लब्धपुरुषाकार इति यावत् । कोऽसौ हिरण्मयः पुरुषो य इमां पृथिवीं पश्यति इमामित्युपलक्षण त्रैलोक्यमवभासयतीत्यर्थः । अस्य

स्यात् स एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति ॥ ॥ १ ॥

अथ य एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति स

पुरुषस्य हिरण्मयत्वे निमित्तं स्वयमेवाह हिरण्यवस्थादिति। हिरण्ये हिरण्मये तेजःसङ्घातात्मके मण्डलेऽवस्थादवस्थानात् तदभेदेनावस्थितत्वादित्यर्थः। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो"रित्यवोपसर्गेऽवर्णलोपः। पश्यत्यसौ हिरण्यवस्थादितिपाठः प्रामादिकः। यदि सत्यस्तदा द्वितीयार्थे प्रथमा विपरिणेया, इमाँल्लोकान् पश्यतीत्यर्थः। इदानीमस्याध्यात्ममवस्थानमाह स एष इति। यो हिरण्मयाण्डस्थतया हिरण्मयः पुरुष उक्तः स एषोऽन्तरे देहाभ्यन्तरे यद्धृत्पुष्करं हृदयकमलं तस्मिन् हृत्पुष्करे एव आश्रितस्तत्रैव प्राकट्यमुपगतः प्राणात्मा सन्नन्नमदनीयमत्ति भुङ्क्ते विषयान् वा शब्दादीनुपभुङ्क्त इत्यर्थः ॥ १ ॥

एवमादित्यमण्डलान्तरभिव्यक्तं हिरण्मयत्वादिगुणकं पुरुषमनूद्य तस्य हृद्यन्तर्वर्तिप्राणात्मभावं विधायेदानीमुक्तप्राणात्मानमनूद्य तस्यादित्यात्मभावं विदधाति "अथ य एषोऽन्तरे ० अन्नमत्तीति" इति। अन्नमत्तीत्यन्तोऽनुवादभागो व्याख्यातः। स एष एवाऽग्निरत्ता दिवि द्युलोके श्रितः आश्रितः स्थित इत्यर्थः। कोयमग्निरित्यत आह सौरः सूर्यतेजोरूपः,

एषोऽग्निर्दिवि श्रितः सौरः कालाख्योऽदृश्यः सर्वभूतान्यन्नमत्तीति। कः पुष्करः किम्मयो वेति। इदं वाव तत्पुष्करं योऽयमाकाशोऽस्येमाश्चतस्रो दिशश्चतस्र उपदिशो दलसंस्था आसं। अर्वाग्विचरत एतौ

स एव प्राणिनां कलनात् कालाख्यः काललाञ्छितः, अदृश्यः प्रत्यक्षागोचर एव सन् सर्वभूतान्येवान्नं तान्यत्ति सर्वभूतानि संहरति, इतिशब्दो व्यतिहारोपदेशसमाप्त्यर्थः। यत्र पुष्करे स्थितोऽन्नमत्तीत्यध्यात्ममुक्तं दिवि श्रितोऽन्नमत्तीति चाधिदैवं, तदुभयस्वरूपजिज्ञासया वालखिल्याः पृच्छन्ति "कः पुष्करः ० वेति" इति। स्पष्टार्थः। उत्तरमाह प्रजापतिः "इदं वाव ० आसं" इति। योऽयं प्रसिद्ध आकाश इदं वावेदमेव तत्पुष्करं, यदध्यात्महृत्पुष्करमुक्तं तदिदमेवाधिदैवं प्रसिद्धमाकाशं, नानयोः स्वरूपभेदोऽस्तीत्यर्थः। तथा चाकाशमेव हृदये ब्रह्माण्डान्तरे च पुष्करमिति स्वरूपप्रश्नस्योत्तरमुक्तम्। किम्मय इति प्रश्नस्योत्तरं वदन् हृदयपुष्करस्याऽष्टदलमयत्वं प्रसिद्धमिति मत्वाधिदैवपुष्करदलान्याहास्येति। अस्याकाशपुष्करस्येमाः प्रसिद्धाः प्राच्याद्या आग्नेय्याद्याश्चतस्रश्चतस्रो दिशो दलसंस्था दलत्वेन स्थिता आसं आसन्नित्यर्थः। तथा च हृदयाकाशबाह्याकाशयोर्हृदयकमलगताष्टदलानामष्टदिशाञ्चाभेदो ध्येय इति तात्पर्यार्थः।

प्राणादित्या एता उपासीतोमित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति ॥ २ ॥

द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्चाथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः स

एवमध्यात्माधिदैवयोः प्राणादित्यपुरुषयोर्भेदेन प्रतीयमानस्थानगुणक्रियाणामभेददर्शनं विधाय पुनस्तावनूद्य सगायत्रिव्याहृतिप्रणवालम्बनं तयोरुपासनं विदधाति "अर्वाग्विचरत ० सावित्र्या चेति" इति। एतौ प्राणादित्यौ यथाव्याख्यातौ अर्वागदूरे सन्निहितौ विचरतः परिवर्तेते हृदये बाह्याकाशे चेत्यर्थः। एतौ उपासीत ध्यायेत्। कथं, ओमित्येतदक्षरेण एतेनाक्षरेणेत्येतत्, व्याहृतिभिर्भूर्भुवः स्वरित्येताभिस्तिसृभिः, सावित्र्या सवितृदेवत्यर्चा गायत्र्याख्यया चेति। इतिशब्द ओङ्काराद्यालम्बनविध्युपसंहारार्थः ॥ २ ॥

इदानीमुपासनालम्बनत्वेनोक्तस्योङ्कारस्य तत्त्वं प्रतिपादयिष्यंस्तत्स्तुतये तदुत्पत्तिप्रकारमाह "द्वे वाव ० युञ्जीतेति" इति। ब्रह्मणः परमात्मनो द्वे वाव द्वे एव रूपे रूप्यतेऽधिष्ठानतया ब्रह्माऽऽभ्यामिति रूपे निरूपके इत्यर्थः। के ते इत्यत आह, मूर्तञ्च मूर्तं मूर्च्छितावयवं कार्यं, अमूर्तं तद्विपरीतं च कारणम्। अथानयोर्मध्ये यन्मूर्तं तदसत्यं 'वाचारम्भणं विकारो नामधेयं' इति श्रुतेर्यदमूर्तं तत्सत्यं 'मृत्तिकेत्येव सत्यं इति (छान्दो०। ६ अ०)

आदित्यः स वा एष ओमित्येतदात्माभवत् स त्रेधात्मानं व्यकुरुत ओमिति तिस्रो मात्रा एताभिः सर्वमिदमोतं

---

श्रुतेः यत्सत्यं परमार्थसत्यं सर्वाधिष्ठानं तद्ब्रह्म परिवृढं 'सदेव सोम्येदमग्र आसीत् तत्सत्यं स आत्मा' इति श्रुतेः। ब्रह्मशब्दार्थमाह, यद्ब्रह्म तत् ज्योतिः प्रकाशस्वभाव यत् तज्ज्योतिर्ब्रह्माख्यं स आदित्यः सूर्यः 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः। स आदित्यो वै एष ब्रह्मप्रकाशात्मक ओमित्येतदात्मा ओङ्कारस्वरूपोऽभवत् प्रणवात्मनोदित इत्यर्थः। ओङ्कारो ह्यनुज्ञाचरं प्रसिद्ध 'तद्वा एतदनुज्ञाचरं यद्धि किञ्चानुजानात्योमित्येव तदाह' इति (छान्दो०। १ अ०) श्रुतेः। आदित्यश्चानुज्ञां कुर्वन्निव जगतामुदेति 'य एवासौ तपति तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति' इति श्रुतेः। एवं प्रणवीभूतः स आदित्य आत्मानं प्रणवं त्रेधा त्रिप्रकारमकुरुत कृतवान् ओमिति अ उ म् इति तिस्रो मात्रा अवयवाः, एताभिः सर्वमिदमोतं प्रोतञ्चैव। यथा दीर्घतन्तुषु तिर्यक्तन्तवः प्रोतास्तिर्यक्तन्तुषु दीर्घतन्तव ओता वैपरीत्येन वा परस्परं संयोगविशेषेणैकीभूताः सन्तः पटशब्दवाच्या भवन्त्येवं प्रणवात्मके मय्येवाशेषस्योतप्रोततयावस्थानादहमेव प्रणवात्मोतञ्च प्रोतञ्चास्मि न मत्तोऽन्यत् किञ्चिदित्येवं ह्याह। स आदित्यो यतस्तस्मादेतद्वै एष वै आदित्य ओमित्योङ्कार एवेत्येवं ध्यायत चिन्तयत हे वालखिल्याः। ध्यानशब्दार्थमाह आत्मानं

प्रोतं चैवास्मीत्येवं ह्याहैतद्वा आदित्य ओमित्येवं ध्यायत आत्मानं युञ्जीतेति ॥ ३ ॥

अथान्यत्राप्युक्तमथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ

प्राणप्रधानं प्रत्यक्षमादित्ये आदित्यञ्चात्मनि युञ्जीत, व्यत्ययो बहुलमिति लकारवचनव्यत्ययेन योजयत, एकात्मतां भावयतेत्यर्थः । इतीत्यनुवाकसमाप्त्यर्थः ॥ ३ ॥

ॐकारेणात्माभिध्यानविधिं सहीकुर्वंस्तत्रैव विशेषान्तरं विधित्सन्नाह "अथान्यत्राप्युक्तं ० तस्य तत्" इति । अथैतदन्यत्र छान्दोग्येऽप्युक्तं प्रणवस्योपासनं, यद्यपि तत्राङ्गावबद्धमुपासनमिह तु स्वतन्त्रं तथापि स्तुत्यर्थमुदाहरणं न गुणोपसंहारार्थमिति द्रष्टव्यम् । प्रणवोद्गीथयोरेकत्वकथनारम्भार्थोऽथशब्दः । खलुशब्दः कर्मप्रकरणोक्तोद्गीथस्मारणार्थः । य उद्गीथः सामगानामुद्गीथभक्त्यवयव ओङ्कारः स बह्वृचानां शस्त्राङ्गभूतः प्रणवः, यश्च बह्वृचानां प्रणवः स उद्गातॄणामुद्गीथः । एवं शस्त्रस्तोत्राङ्गतया भिन्नस्थाननिवेशिनोरोङ्कारव्यक्त्योरभेददृष्टिं विधाय तस्योद्गीथात्मकस्य प्रणवस्यादित्यात्मना द्रष्टव्यतामाह, इत्यसौ वा आदित्य उद्गीथ उद्गीथावयव ओङ्कार इत्यर्थः । एष आदित्य एव प्रणवः शास्त्राङ्गभूत ओङ्कार इत्येवं हि आह छान्दोग्यश्रुतिरित्यर्थः । एवं स्तुत्या सहीकृतमादित्यं

एष प्रणवा इत्येवं ह्याहोद्गीथं प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं त्रिपदं त्र्यक्षरं पुनः पञ्चधा ज्ञेयं निहितं गुहायामित्येवं ह्याहोर्द्धमूलं त्रिपाद्ब्रह्म

पुनर्विशिनष्टि गुणान्तरविशिष्टतया ध्यानार्थं, उद्गीथमित्यादिना। छन्दोगानामुद्गीथभक्त्यवयवत्वेनोद्गीथं बह्वृचानां शास्त्रान्तर्गतप्रणवाख्यं प्रणेतार प्रकर्षेण तत्तत्कर्मणां प्रवर्तयितारमत एव प्रणवाख्यमित्यर्थः, भाः प्रकाशो रूपं स्वरूपं यस्य स भारूपस्तं, विगता नित्य-निवृत्ता निद्राऽविद्या तमोरूपा यस्मात् तं विगतनिद्रं, विजरं जरारहितं सदैकरूपमिति यावत्, विमृत्युं विगतमृत्युमविनाशिनं, त्रीणि पदानि यस्य जाग्रत्स्वप्नसुषुप्ताख्यानि प्राणरूपस्य भूर्भुवः-स्वरिति त्रैलोक्याख्यान्यादित्यरूपस्य स त्रिपदस्तं त्रिपदं, त्रीण्य-क्षराणि यस्याकारोकारमकाराख्यानि प्रणवरूपस्य स त्र्यक्षरस्तं त्र्यक्षरं, पुनः पञ्चधा ज्ञेयं विचिन्त्यं यतो *( चिन्तयतो ) गुहायां देहकुहर-रूपायां निहितमाश्रितं देहान्तश्चरन्तं प्राणापानादिरूपेण पञ्चधा ज्ञेयमित्यर्थः। इत्येवं हि आह गुणविधायिनी श्रुतिरिति शेषः। एवं विशेषितमोमित्यनेनैतदुपासीतेति वक्ष्यमाणेनान्वयः। उक्तविशेषण-स्यादित्यात्मनो भारूपत्वं विशेषतो ध्येयमित्यभिप्रेत्य वाच्यवाचकयोः

* त्रितिं यत इति लिखितं।

शाखा आकाशवाय्वग्न्युदकभूम्यादय एकोऽश्वत्थनामै-तद्ब्रह्मैतस्यैतत्तेजो यदसा[१] आदित्य ओमित्येतदक्षरस्य चैतत् तस्मादोमित्यनेनैतदुपासीताजस्रमित्येकोऽस्य सम्बोधयितेत्येवं ह्याह ।

परब्रह्मप्रणवयोः सारभूतोऽय सवितेति तन्महिमानमाविष्करोति ऊर्द्धमूलमिति । ऊर्द्धं विकारातीतं परं ब्रह्म मूलमुपादानम् । तदेव मूलं स्वरूपतो निर्दिशति त्रिपाद्ब्रह्मेति । त्रिपादस्यामृतं दिवीति मन्त्रभागप्रकाशितं विकारातीतं ब्रह्मास्य वाच्यप्रपञ्च-स्याश्वत्थनाम्न ऊर्द्धं मूलमित्यर्थः । अस्य शाखा आकाशादयो विकाराः, भूम्यादय इत्यादिपदेन चराचरग्रहः, शिष्टं प्रसिद्धार्थम् । एवंलक्षणः एको ब्रह्माण्डलक्षण समष्टिपिण्डोऽश्वत्थनामा श्वःपर्यन्तं स्थास्यतीति विश्वासानर्हत्वादश्वत्थसञ्ज्ञ इत्यर्थः । यदेतदश्वत्थसञ्ज्ञितं जगदेतद्ब्रह्म ब्रह्मोपादानत्वान्न ततोऽन्यदित्यर्थः, तथाच काठक-श्रुतिः 'ऊर्द्धमूलो अवाङ्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' इति । एतस्य सर्ववाच्याश्रयतया सर्वात्म-कस्य ब्रह्मण एतत् तेजः प्रकाशः सार इत्यर्थः । किमित्युच्यते यदसा आदित्यो योऽसावादित्यः प्रसिद्ध एतद्ब्रह्मणस्तेज इति योजना । सर्ववाच्याधिष्ठानब्रह्मसारत्वमुक्त्वा सर्ववाचकाधिष्ठानप्रणव-सारताम्स्योपदिशति ओमित्येतदक्षरस्य चैतदिति एतत् तेजो यदसा आदित्य इति पूर्वेण योजना । ओङ्कारादित्ययोरुक्तं

(१) यदसावादित्य इति प० पा०

एतद्देवाक्षरं पुण्यमेतद्देवाक्षरं परम् ।
एतद्देवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥

अथान्यत्राप्युक्तं स्वनवत्येषास्य तनूर्या ओमिति स्त्रीपुन्नपुंसकेति लिङ्गवत्येषाऽथाग्निर्वायुरादित्या इति

महिमानमनूद्योपास्यत्व सिद्धमुपसंहरति तस्मादिति । एतत् प्राणादित्यात्मकं तत्त्वमजस्रमुपासीतेति सम्बन्धः । इतिशब्द उपासनविध्यनुवादसमाप्त्यर्थः । प्रणवेनोपासनविधिस्तुतये प्रणव-माहात्म्यवादिवाक्यमुदाहरति एकोऽस्येति । अस्य प्रणवस्य एकः श्लोकरूपो मन्त्रः *सम्बोधयिता माहात्म्यप्रकाशको विद्यते इत्येवं ह्याह कठश्रुतिरित्यर्थः । तमेव श्लोकं किञ्चिदक्षरभेदेन पठति एतदिति । एतद्देवाक्षरं प्रणवाख्यं पुण्यं पुण्यप्रदं पुण्यकर्मसु प्रयुज्यमानमित्यर्थः, एतद्देवाक्षरं परं परब्रह्मप्रकाशक मोक्षद-मित्यर्थः । किं बहुना एतद्देवाक्षरं ज्ञात्वा ममेष्टदमेतदेव नान्यदिति निश्चित्य तत्परः सन् यो यदिच्छति अभ्युदयं वा मोक्षं वा फलं तस्य तद्भवत्येवेत्यर्थः ॥ ४ ॥

पुनरप्युपास्यस्यात्मनो गुणान्तरविधानायोत्तरोऽनुवाकः "अथान्यत्राप्युक्तं ० अक्षरमिति" इति । अस्य प्राणादित्यात्मन एषा तनूस्तनुः स्वनवती शब्दवती । सा केत्यत आह या ओमितीति ओङ्काररूपा तनुरुदात्तानुदात्तस्वरितरूपैस्त्रिस्वर्येणोच्चार्यमाणा स्वनवतीत्यर्थः । प्रणवावयवेष्वकारादिषु एकैकं त्रिक त्रिकमवयवशो

* सम्बन्धयितेति टीकापाठ' ।

भास्वत्येषाथ ब्रह्मा रुद्रो विष्णुरित्यधिपतिवत्येषाथ गार्हपत्यो दक्षिणाग्निराहवनीया इति मुखवत्येषाथ ऋग्यजुः सामेति विज्ञानवत्येषा भूर्भुवः स्वरिति लोकवत्येषाथ भूतं भव्यं भविष्यदिति कालवत्येषाथ प्राणोऽग्निः सूर्या इति प्रतापवत्येषाथान्नमापश्चन्द्रमा इत्याप्यायनवत्येषाऽथ बुद्धिर्मनोऽहङ्कारा इति चेतनवत्येषाथ प्राणोऽपानो व्याना[१] इति प्राणवत्येषेत्यत ओमित्युक्तेनैताः प्रस्तुता अर्चिता अर्पिता भवन्तीत्येवं ह्याहैतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोमित्येतदक्षरमिति ॥ ५ ॥

---

विभज्य प्रणवावयविनः स्वनवत्याद्यात्मतामापाद्य तादृक्प्रणवतनुत्वेन प्राणादित्यात्मनस्तत्तद्गुणवैशिष्ट्यं ध्येयमिति प्रकरणार्थः। येषां ये स्वभावसिद्धा धर्मास्तैस्तद्वत्येषेति सुबोधोऽक्षरार्थः, इति यतः अतः ओमित्युक्तेनाक्षरेण एताः प्रस्तुताः स्वनवत्याद्यास्तनवोऽर्चिताः पूजिताः स्तुताः अर्पिताः प्राणादित्यात्मनि विशेषणत्वेन समर्पिताः समारोपिता भवन्तीत्येवं हि आह एतमर्थं प्रश्नश्रुतिरित्यर्थः। तामेव पठति एतद्वा इति। पिप्पलाद आचार्यः सत्यकामं शिष्यं प्रत्याह हे सत्यकाम ओमित्येतदक्षरमिति यदस्ति एतद्वै एतदेव परञ्च ब्रह्म अपरञ्च ब्रह्मेति विद्धीति। परापरब्रह्मज्ञानोपायनयोरालम्बनमेतदेवाक्षरमित्यर्थः ॥ ५ ॥

---

(१) व्यान इति पु० पा०

अथाव्याहृतं वा इदमासीत् स सत्यं प्रजापतिस्तप-स्तप्त्वाऽनुव्याहरद्भूर्भुवः स्वरित्येषैवास्य प्रजापतेः स्थविष्ठा तनूर्या लोकवतीति स्वरित्यस्याः शिरो नाभिर्भुवो भूः पादा आदित्यश्चक्षुः। चक्षुरायत्ता हि पुरुषस्य महती मात्रा चक्षुषा ह्ययं मात्राश्चरति सत्यं वै

---

एतौ प्राणादित्या एता उपासीतोमित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति यत् सूत्रमुपन्यस्तं तत्र प्रणवापेक्षितो विशेषः सर्व उक्तः, इदानीं व्याहृत्यपेक्षितो विशेषस्तदुत्पत्त्यादिप्रशंसनेनोपपादनीय इत्युत्तरोऽनुवाक आरभ्यते "अथाव्याहृतं ० चक्षुः" इति । अथेति व्याहृतिव्याख्यानारम्भार्थः । इदं त्रैलोक्यं पूर्वमव्याहृतमशब्दनिर्दिष्टं वै आसीत्, सत्यं स प्रजापतिरिति सम्बन्धः सच्च त्यच्चेति सत्यं पञ्चभूतपरिणामात्मकमव्याहृतमासीत् । तदा स प्रजापतिस्त्रैलोक्य-शरीरो ब्रह्मा तपस्तप्त्वा प्रागाहितसंस्कारोद्बोधकमालोचनं कृत्वा भूर्भुवः स्वरित्येवमनुक्रमेणोच्चारितवान् पादनाभिशिरःप्रदेशा-नालभ्य भूर्भुवःस्वरिति क्रमेणोच्चारितवानित्यर्थः । एवं स्पष्टोच्चारणे हेतुमाह एषैव लोकत्रयात्मिकास्य प्रजापतेः स्थविष्ठा स्थूलतमा तनूः शरीरं या लोकवतीति पूर्वानुवाकेऽवोचमित्यध्याहारः । तत्र का व्याहृतिः किमङ्गवाचिकेत्येतद्विभजते स्वरित्यादिना ।

चक्षुरक्षिण्यवस्थितो हि पुरुषः सर्वार्थेषु चरत्येतस्मात् भूर्भुवः स्वरित्युपासीतानेन हि प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवतीत्येवं ह्याहैषा वै प्रजापते-

अस्यास्तन्वाः। एवं व्याहृत्युत्पत्तिं तदर्थञ्चोपदिश्य प्रकृतस्यादित्यात्मन उपास्यस्य तत्सम्बन्धं वक्तुं व्याहृतिशरीरप्रजापत्यवयवतां तस्योपदिशति आदित्यश्चक्षुरिति। सर्वाङ्गेषु चक्षुषः प्राधान्यमुपपादयन्नादित्यं महीकरोति "चक्षुरायत्ता ० उपासीत" इति। पुरुषस्य व्यवहर्तुः महती अपरिमिता मात्रा मीयते ज्ञायत इति मात्रा विषयः मितिरेव वा मात्रा विषयसिद्धिः, हि निश्चितं चक्षुरायत्ता चक्षुरधीना। उक्तमर्थं लोकप्रसिद्ध्योपपादयति हि यस्मादयं पुरुषश्चक्षुषा मात्राः विषयांश्चरति दूरस्थानपि निम्नोन्नतसमविषमदेशानपि प्रतिपद्यते, अतश्चक्षुरायत्ता पुरुषस्य महती मात्रेत्यर्थः। प्रजापतेर्मुख्याङ्गत्वेनादित्यं महीकृत्येदानीं मात्रादेव प्रजापत्यात्मतां सम्पादयति सत्यमिति। वै प्रसिद्धं चक्षुः सत्यं चक्षुर्दृष्टस्य सत्यत्वप्रसिद्धेः प्रजापतिरपि सत्यं सत्यदात्मकत्रैलोक्यशरीरत्वात्, अतश्चक्षुरादित्यः सत्यमित्युक्ते सत्यात्मा प्रजापतिरादित्य इत्युक्तं भवतीति भावः। चक्षुषः सत्यत्वमुपपादयति अक्षिणीति। चरत्यविसंवादितया हि प्रसिद्धमेतदित्यर्थः।

**विश्वभृत्तनूरेतस्यामिदं सर्वमन्तर्हितमस्मिंश्च सर्वस्मिन्नेषान्तर्हितेति तस्मादेषोपासीत ॥ ६ ॥**

**तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय* आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ**

उपसंहरत्येतस्मादिति। उक्ताद्धेतोरित्यर्थः। अनेन हि व्याहृत्यात्मतयादित्याऽऽत्मोपासनेन विश्वचक्षुः सूर्य इव विश्वात्मा प्रजापतिरूपासितो भवतीत्येवं ह्याह कश्चिच्छ्रुत्यन्तरमिति शेषः। किमाहेति तदाह एषेति। एषा वै पूर्वोक्ता सूर्यरूपा प्रजापतेर्ब्रह्मणो विश्वं बिभर्तीति विश्वभृत् तनूः शरीरं। कथमस्या विश्वभृत्त्वमिति तदाह एतस्यामिति। एतस्यां तनौ इदं सर्वं दृश्यमन्तर्हितं गूढं आदित्यप्रकाशाच्छादितमेव सर्वमित्यर्थः। तथास्मिंश्च सर्वस्मिन् दृश्ये विषये एषा तनूरन्तर्हिता तत्तदर्थप्रकाशकत्वेन तत्तदात्मतामापन्ना सती प्राकृतैर्जनैः परिपूर्णा न दृश्यत इत्यर्थः। यद्वा प्राणरूपेण सर्वस्मिन्नेषान्तर्हितेत्यर्थः। व्याहृतिगुणविधिमुपसंहरति तस्मादिति। एषा व्याहृत्यात्मिका तनूरुक्ता तस्मादेतां तथैवोपासीतेति योजना ॥ ६ ॥

इदानीं पूर्वं प्रतिज्ञातां सावित्रीशरीरताञ्चास्योपपादयितुमुत्तरानुवाक आरभ्यते "तत्सवितुः ० ब्रह्मवादिनः" इति।

---

* प्रचरणीय इति पाठान्तरं।

भर्गो देवस्य धीमहीति सविता वै देवस्ततो योऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति बुद्धयो वै धियस्ता योऽस्माकं

आदौ मन्त्रप्रतीकान्यादाय व्याचष्टे तत्सवितुर्वरेण्यमिति प्रथमः पादस्तस्यार्थोऽसौ वा इत्यादिनोच्यते। तत्र सवितुस्तत्स्वरूपं वरेण्यमित्यन्वये सवितुरिति षष्ठी पुरुषस्य चैतन्यमितिवदविवक्षितस्वार्थेति मत्वा सवितृपदार्थमाहासौ वा इति। असौ वै प्रसिद्धो जगदवभासकत्वेन विभाव्यमानः सविता सवितुरिति मन्त्रपदेनोक्त इत्यर्थः। वरेण्यशब्दार्थमाह स वा इति। स वै स एव सविता, एवं यथोक्तात्मस्वरूपेण प्रवरणीयः प्रकर्षेण तदेकनिष्ठतया प्रार्थनीयस्तदात्मभावना कार्येति यावत्, केन आत्मकामेन, काम्यत इति काम आत्मैव कामः प्राप्यो यस्य स आत्मकामस्तेन आत्मनः स्वाभाविकस्वरूपाविर्भावकामेनेति यावत्। इत्याहुर्ब्रह्मवादिनो ब्रह्मवदनशीला वेदार्थविद इत्यर्थः। द्वितीयपादप्रतीकारम्भार्थोऽथशब्दः। भर्गो देवस्य धीमहीति प्रतीकग्रहणम्। तत्र देवपदस्यार्थमाह सविता वै देवः। सवितैव देवशब्दार्थः, स एव द्योतनाद्देव उच्यते अत्रापि षष्ठ्यर्थो न विवक्षितः। ततस्तस्मात् द्योतनस्वभावत्वाद्योऽस्य सवितुर्भर्गाख्यो व्याख्यास्यमानभर्गशब्दवाच्य आत्मा तं चिन्तयामीति धीमहीत्यस्यार्थमाहुर्ब्रह्मवादिन इति। पूर्ववत् चिन्तयामीत्येकवचनमर्थतः

प्रचोदयादित्याहुर्ब्रह्मवादिनः। अथ भर्गा इति यो ह वा अमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणि वैष भर्गाख्यो भाभिर्गतिरस्य हीति भर्गा भर्जयतीति वैष भर्गा इति रुद्रो ब्रह्मवादिनोऽथ भ इति भासयतीमान्

— — —

पर्यायनिर्देशनपरं न तु धीमहीत्युक्तबहुवचनस्यैकवचनान्तत्वेनोह-प्रदर्शनार्थं, 'वयं स्याम पतयो रयीणां' इतिवत् कर्त्रैक्येऽपि मन्त्रेषु बहुवचनप्रयोगस्य साधुत्वात् चक्षुरादिकरणोपाधिभेदेनैकस्मिन्नपि बहुत्वसम्भवाद्वेति द्रष्टव्यम्। अथ तृतीयपादग्रहो धियो यो नः प्रचोदयादिति। धीशब्दार्थः प्रसिद्ध एवेत्याह बुद्धयो वै धिय इति। अन्तःकरणवृत्तय इत्यर्थः। ताः बुद्धीरस्माक-मस्मदीयाः यः प्रचोदयात् प्रकृष्टं प्रेरयत्वित्याशिषि लिङ् इत्याहुरित्युक्तार्थम्। तथा चेत्थं मन्त्रयोजना, यो देवः सविता तस्य सवितुर्देवस्य तद्वरेण्यं भर्गाख्यं वयं धीमहि स नो धियो धीः प्रचोदयादिति। यदुक्तं मन्त्रव्याख्यानेऽसौ वा आदित्यः सविता, सविता वै देवः, यस्य भर्गाख्य इति च तत्रादित्य-सवितृभर्गशब्दा न स्पष्टार्था इति तान् व्याख्यातुमारभमाणो ऽतिगहनार्थत्वाद्भर्गशब्दार्थं तावदाह "अथ भर्गा ० भर्गः" इति। अथ पदविशेषार्थ उच्यते भर्ग इति, कोऽर्थोऽयमेव यो ह य एव वै य आदित्ये तिष्ठन् यश्चक्षुषि तिष्ठन्निति च

लोकान् र इति रञ्जयतीमानि भूतानि ग इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः प्रजास्तस्माद्भरगत्वाद्भर्गः। शश्वत् सूयमानात् सूर्यः सवनात् सविताऽऽ-

अत्यन्तरप्रसिद्धोऽमुष्मिन्नादित्ये मण्डलात्मनि निहितः सन्निहितस्तथाक्षिणि चक्षुर्मण्डले वा यस्तारकः कृष्णतारकोपलक्षितोऽन्तर्यामी देव एष भर्गाख्य इति। भर्गत्वमस्य कथमित्यपेक्षायां तन्नाम निर्वक्ति भाभिरित्यादिना। भाभिः किरणैरधिष्ठानधर्मैरस्य गतिर्गमनं विषयव्याप्तिरस्येति व्युत्पत्तेर्भर्ग इत्येकं निर्वचनमित्यर्थः। निर्वचनान्तरमाह भर्जयतीति। वा अथवा भर्जयति जगत् संहरतीति रुद्रो भर्ग इति ब्रह्मवादिन आहुरिति योजना। इदानीं भकाररेफगकाराणां प्रत्येकनिर्वचनं ब्रुवन्नस्य भर्गाख्यां सहीकरोति अथ भ इत्यादिना। भासयति तेजोमण्डलान्तर्गतचित्प्रकाशेनेमान् सर्वानेव लोकानिति भ इत्युच्यत इत्यर्थः। इमानि भूतानि स्थावरजङ्गमात्मकानि प्राणानुगतचिदानन्दात्मना रञ्जयति प्रीणयति सुखासक्तं करोतीति र उच्यत इत्यर्थः। अस्मिन् सर्वकारणात्मनि सुषुप्तिप्रलययोः सर्वाः इमाः प्रजा गच्छन्ति लयं प्राप्नुवन्ति तथा प्रबोधसृष्ट्योरस्मादेवागच्छन्त्याविर्भवन्तीति ग इत्युच्यत इत्यर्थः। तस्माद्भासनाद्रञ्जनाद्गमनाच्च भरगत्वाद्भर्ग इति सर्वात्मोच्यत इत्यर्थः। इदानीमादित्यादिनामनिर्वचनं कुर्वंस्तत्पर्यायशब्दानपि कांश्चिन्निर्वक्ति "शश्वत् ० ह्याह"

दानादादित्यः पवनात् पावनोऽथापो प्यायनादित्येवं ह्याह। खल्वात्मनो त्मा नेतामृताख्यश्चेता मन्ता गन्तोत्स्रष्टानन्दयिता कर्ता वक्ता रसयिता घ्राता द्रष्टा श्रोता स्पृशति च विभुर्विग्रहे सन्निविष्टा इत्येवं ह्याह।

---

इति। असवत् पुनः पुनः सूयमानात् सवनकरणात् सूर्यः सूर्यो हि प्रातरादिसवनकर्ता प्रसिद्ध इत्यर्थः। सवनादन्नादिनिष्पादनेन प्राणिनां प्रसवनात् सविता। आदानाद्भौमरसानां प्राण्यायुषां वा आदित्यः। पवनात् पवित्रीकरणात् पावनो वाय्वात्माप्येष इत्यर्थः। अथ अपि आपो जलमप्ययमित्यर्थः। कुतः प्यायनाज्जगदाप्यायनादित्यर्थः। इत्येवं हि नामनिर्वचनान्यभिप्रेत्याहाचार्य इत्यर्थः। एवं मन्त्रपादद्वयोक्तमाधिदैवकं तत्त्वं निरुच्य तृतीयपादोक्तमाध्यात्मिकं तत्त्वं निर्वक्ति "खल्वात्मनो ० ह्याह" इति। अमृताख्यः प्राणरूपः प्राणो वा अमृतमिति श्रुत्यन्तरात् अमृताख्यः खलु प्राणरूप आत्मनः कार्यकारणसङ्घातस्य नेता प्राणोपाधिक आत्मा मर्त्यसङ्घातनेतृत्वेन ततो विलक्षणत्वादमृताख्य इत्यर्थः। चित्तवृत्त्युपाधिकश्चेता, मनोवृत्त्युपाधिना मन्ता, पादोपाधिप्रधानो गन्ता, पायूपाधिनोत्स्रष्टा, उपस्थोपाधिनाऽऽनन्दयिता, हस्तोपाधिकः कर्ता, वागिन्द्रियोपाधिको वक्ता, रसोपाधिको रसयिता प्राणोपाधिर्घ्राता चक्षुरुपाधिको द्रष्टा श्रोत्रोपाधिः श्रोता त्वगिन्द्रियोपाधिः स्पृशति स्प्रष्टा भवतीत्यर्थः,

**अथ यत्र द्वैतीभूतं विज्ञानं तत्र हि शृणोति पश्यति जिघ्रति रसयति चैव स्पर्शयति सर्वमात्मा जानीतेति**

चकाराद्बुद्ध्याध्यवसिताहङ्कारेणाभिमन्ता चोच्यते कोऽयमेवं व्यपदिश्यत इत्यत आह विभुर्व्यापको विग्रहे देहे सन्निविष्टः सम्यगभिमानितया निविष्टः स्रष्टेश्वरो देहमनुप्रविष्ट प्राणान्तः-करणेन्द्रियोपाधिभिर्नानाव्यपदेशभाग्भवति स एकः सर्वबुद्धि-प्रेरकः आत्मोपास्य इत्यभिप्रायः इत्येवं ह्याहेति पूर्ववत् नन्वेकस्यात्मनोऽनेकोपाधिकृतः संज्ञाभेदः इत्यायुक्तं प्रतीय-मानप्रातिस्विककार्यभेदेनात्मभेदस्य प्रामाणिकत्वादिति प्रासङ्गिक चोद्यं परिहर्तुमात्मानात्मतत्त्वं निरूपयति "अथ यत्र ० तदवाच्य" इति। अथैवं सति आत्मभेदशङ्का न कार्येति शेषः। यत्र द्वैतीभूत भेदमापन्नं विज्ञानं चित्प्रकाशस्तत्र हि तस्यामवस्थायां जाग्रदादौ शृणोति पश्यतीत्यादिव्यपदेश-भागात्मा भवति न स्वभावत इत्यर्थः। कथमेतदवगम्यत इति तत्राह सर्वमात्मा जानीतेतीति सर्वं सर्वेन्द्रियद्वारं व्यवहार-जातमात्मा एक एव जानीते स्वात्मैकनिष्ठत्वेन प्रत्यभिजानाति, इतिहेतोर्न परमार्थो भेद इत्यर्थः। तथाच श्रुत्यन्तरं 'आत्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति' इत्युपाध्युप-रागपरित्यागेन सर्वोपाध्युपलक्षितमेकमात्मानं निरूपपदेनात्म-शब्देन निर्दिशति। लोके च यश्चक्षुषा रूपमद्राक्षं सोऽहमिदानीं रसनेन रसमनुभवामीति प्रत्यभिज्ञानुभवः प्रसिद्धोऽतो नात्म-

**यत्राद्वैतीभूतं विज्ञानं कार्यकारणकर्मनिर्मुक्तं निर्वचनमनौपम्यं निरूपाख्यं किं तदवाच्यं ॥ ७ ॥**

**एष हि खल्वात्मेशानः शम्भुर्भवो रुद्रः प्रजापति-**

---

भेदशङ्केति भावः। उपाध्यन्वये भेददर्शनं व्यपदेशभेदश्चोपपाद्य तद्व्यतिरेके तद्व्यतिरेकमुपपादयति यत्राद्वैतीभूतमिति। यत्र यस्यामवस्थायां सुषुप्त्यादौ सर्वोपाध्युपरमादद्वैतीभूतं विज्ञानं तत्रेत्यध्याहारः तदा कार्यकारणकर्मभिर्विषयकरणक्रियाभिर-वच्छेदकैर्निर्मुक्तमसंस्पृष्टं अतएव निर्वचन विशेषसञ्ज्ञावचनशून्यं अनुपममेवानौपम्यमुपमारहित स्वतो निर्विशेषमित्यर्थः। अतएव निरूपाख्यमप्रमेयमिदं तदित्युल्लेखायोग्यमित्यर्थः। किमेव निषेध-मुखेनोच्यते, इदं तदिति कस्मान्नोच्यत इति शङ्कते, कि तदिति। अशक्यं तथा वक्तुमित्युत्तरमाह अवाच्यमिति। सर्ववाग्व्यापारोपरमे यदवशिष्यते सर्वोपरमसाक्षित्वेन तदद्वैतं विज्ञानं स्वाभाविकमात्मरूपमिति भावः। तथा च बृह-दारण्यके 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिना द्वैतदर्शनस्याभासतामुक्त्वा 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येत्' इत्यादिनाऽद्वैतमात्म-तत्त्वमुपपादयति श्रुतिः। तस्मादनामरूपक्रियस्यात्मनो नाम-रूपक्रिया अविद्याकल्पितप्रपञ्चोपाधिनिबन्धना एवेति परमार्थ इति ॥ ७ ॥

विश्वसृक् हिरण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता सम्राडिन्द्र इन्दुरिति। य एष तपत्यग्निरिवाग्निना पिहितः सहस्रा-

यद्यप्येवं शारीरस्यात्मनो न भेदः पारमार्थिकस्तथाप्यधिदैवादादित्यात्मन ईश्वरादयं भिन्न इति शङ्कां वारयन् अस्यैव ब्रह्मादयोऽपि विभूतय इत्येतमेव सङ्गीकरोति "एष हि खल्वात्मेशानः ० इन्दुरिति" इति। य ईशानादिभिः शब्दैर्व्यपदिश्यते श्रुतिस्मृतिपुराणेषु स एष हि खलु यः पूर्वानुवाकान्ते निर्दिष्ट एष एव नान्य इत्यर्थः। तत्र रुद्रान्तस्तमःप्रधानमायोपाधिकः, हंसान्तो रजःप्रधानमायोपाधिकः। शास्ता विष्णुर्नारायण इति शुद्धसत्त्वप्रधानमायोपाधिकः। जगत्संहारसृष्टिस्थितिहेतुतयाभिव्यक्तविशेषास्तत्तत्संज्ञाभाजो ये जायन्ते ते सर्वेऽप्ययमात्मेत्यभिप्रायः। अयमेवार्कोऽर्च्यः पूज्यः सर्वतत्फलाश्रयत्वात्, तथाच श्रुतिः 'एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्कः' (बृहदा० अ० ८) इति। सवितृशब्दो व्याख्यातः। अयमेवात्मा पृथिव्यादिरूपेण धाता सर्वस्य धारयिता, विधाता पित्रादिरूपेण पुत्रादीनां निर्माता, सम्राट् सार्वभौमो राजा, इन्द्रः स्वराट् स्वर्गाधिपतिः, इन्दुश्चन्द्रमा प्रसिद्धः, एते सर्वेऽप्येष एवात्मेति। किञ्च न केवलमेतावत् "य एष० हिरण्मयेनाण्डेन" इति। यस्तपति जगदभितपति सविता

**छन्नो हिरण्मयेनाण्डेन। एष वा जिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं दत्त्वारण्यं गत्वाथ बहिःकृत्वे-**

सोऽप्येष एवेति योजना। कथं तर्हि स आत्मरूपेण न विभाव्यत इत्यत आहाग्निरिवेति। यथा महता ज्वालाजटिलेनाग्निनाऽग्निः दीपो मन्दः पिहित आच्छन्नो भवति एवं सहस्राक्षेणानेकच्छिद्रवता हिरण्मयेन तेजोमयेनाण्डेन मण्डलात्मकेन ब्रह्माण्डेन वा पिहित आच्छादितः, अतो नात्मरूपेण दृश्यत इत्यर्थः। तथाच मन्त्रवर्णः, 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं' इति। यस्मादयमात्मैकोऽप्येकरूपोऽप्युपाधिभिरनेकोऽनेकरूप इव च विभाव्यमान उपाध्यावृतनिजस्वरूपस्तस्मात् मुमुक्षुभिरावरणनिराकरणेन तद्दर्शने यत्न आस्थेय इत्युपदिशति "एष वा० उपलभेतैनमिति" इति। एष एवाध्यात्माधिदैवरूपेण विभाव्यमान आत्मा किंस्वरूप इति जिज्ञासितव्यो ज्ञातुमेष्टव्यः, तत्तत्त्वज्ञानं सम्पादयितुं गुरूपसत्तिः कार्य्येत्यर्थः। विज्ञानसम्पादनप्रकारमाहाऽन्वेष्टव्यो गुरूपदिष्टवाक्यमर्यादामाश्रित्यान्वेषणेन मननेनावधारणीय इत्यर्थः। तत्र 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः' इति श्रुतिमाश्रित्य सन्न्यासमात्मज्ञानाङ्गमुपदिशति सर्वभूतेभ्य इति। सर्वभूताभयदानं सन्न्यासः स च कर्मपरित्यागलक्षणः तं कृत्वेत्यर्थः, सन्न्यस्य गुरुभ्यः सब्रह्मचारिभ्यस्स

न्द्रियार्थान् *स्वाङ्गशरीरादुपलभेतैनमिति । विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तं ।

श्रवणमनने सम्पाद्यानन्तरमरण्यं विजनं देशं मनःप्रसाद-करं गत्वाथ तदा इन्द्रियार्थान् वाह्यान् दूरतः कृत्वान्तः-शरीर एवात्मानमन्विष्य निदिध्यासनं कुर्वन् स्वाङ्गशरीरात् स्थूलसूक्ष्मलक्षणादेनमात्मानमुपलभेत साक्षात्कारवान् भवे-दित्यर्थः । इतिशब्दः प्रासङ्गिकोपदेशसमाप्त्यर्थः । इदानीं प्रकृते प्राणादित्ययोरेकत्वे प्रश्नोपनिषदुक्तं मन्त्रमुदाहरति “विश्व-रूपं ० सूर्यः” इति । पूर्वार्धे द्वितीयान्तानि पदानि प्रथ-मान्तत्वेन विपरिणेयानि, उदयतीति क्रियायोगार्थं । विश्वानि नीलपीतादीनि रूपाणि यस्य स विश्वरूपः ‘असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः’ इति श्रुतेः । हरति सर्वेषां प्राणिनामायूंषि भौमान् वा रसा-निति हरिणः । जातं जातं वेत्ति सर्वप्रवृत्तिसाक्षितयेति वा जाते जाते विद्यते सर्वदेहगतोष्मरूपेण सर्वचक्षुरधिष्ठातृत्वेनेति वा जातवेदाः । परमयनं परायणं सर्वभासामाश्रय इति यावत् । ज्योतिरेकं ज्योतिरात्मना एक इत्यर्थः, यद्वा ज्योतिः प्रकाशस्वभावः एकोऽद्वितीयः सूर्य एकाकी चरतीति श्रुतेः । तपति सर्वं सन्तापयति शोषयतीति तपन् । सहस्ररश्मिरपरि-

---

* स्वाङ्गशरीरादिति टीकापाठः ।

**सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥**

**तस्माद्वा एष उभयात्मैवंविदात्मन्येवाभिध्यायत्यात्मन्येव यजतीति ध्यानं प्रयोगस्थं मनो विद्वद्भिष्टुतं मनःपूतिमुच्छिष्टोपहतमित्यनेन तत्पावयेत् । मन्त्रं**

---

मितकिरणः शतधा अनेकधा प्रति प्राणिनां प्रतिमां प्रतीत्यभिमुखतया वर्तमान एष मन्दृश्यमानमण्डलस्थः सूर्यः सविता प्रजानां प्राणेऽन्तरात्मा उदयत्युद्गच्छत्युदयाचलादिति मन्त्रपदानामर्थः । तथाच मन्त्रवर्णः 'सूर्य आत्मा जगतस्तस्थुषश्च' इति ॥ ८ ॥

तदेवं प्राणादित्यात्मनोऽन्तर्बहिश्च विचरतः प्रजापतेः कार्यब्रह्मणोऽनेकगुणविशिष्टस्याहं ग्रहेण प्रत्यगात्मतयोपासनं प्रणवव्याहृतिसावित्र्यनुबन्धमुपदिश्य तन्निष्ठस्योपासकस्योपस्थितान्नभोजने कर्तव्यविशेषमुपदिशति "तस्माद्वा ० तत्पादयेत्" इति । एष पूर्वोक्तः प्रत्यगात्मा यस्मादुभयात्मा प्राणादित्यरूपः तस्माद्वै तस्मादेवंवित् पूर्वोक्तप्रकारेण प्राणादित्यात्मविदात्मन्येवात्मनि स्वस्वरूपाभेदेनैवाभिध्यायत्याभिमुख्येन प्रत्यक्तया प्राणादित्यौ ध्यायतीत्यर्थः । ततो यद्यजति पूजयति तन्महिमानमाविष्करोति तदप्यात्मन्येवेत्यर्थः । इति एवंप्रकारेण ध्यानं विद्वद्भिष्टुतं स्तुतं प्रशस्तमित्यन्वयः । किं तद्ध्यानं

**पठति। उच्छिष्टोच्छिष्टोपहतं यच्च पापेन दत्तं मृतसूतकाद्वा वसोः पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतञ्च यदन्यत। अद्भिः पुर**

प्रयोगस्तु उपासनाप्रयोगे स्थित व्याहृत मन तैलधारा घण्टानादादिवदविच्छेदेन दीर्घकालादरनैरन्तर्यभ्युपास्य तत्र निविष्टं मनोरूप ध्यानमित्यर्थः। एव ध्यायतः पुसो यो मनःप्रतिमन्नमो दुर्गन्धो दुर्वासनेत्येतत् तन्मनःप्रतिमुच्छिष्टोप हतमित्येनेन वक्ष्यमाणेन मन्त्रेण तत तस्मिन् काले पावयेत पवित्रयेत् एतन्मन्त्राभिमन्त्रितान्नप्राशनेन प्राणाग्निहोत्रविधिना च शोधयेदित्यर्थः। "मन्त्रं पठति ० यदन्यत" इति। अन्योच्छिष्ट स्वोच्छिष्ट चोच्छिष्टोच्छिष्टमुच्यते तेनोपहत, यदा उच्छिष्टं च उच्छिष्टोपहतञ्चेत्युच्छिष्टोच्छिष्टोपहतमन्न भोज्यं पापेन पापात्मना पतितेन दत्तं यच्चान्न, मृतसूतकाद्वा उपहत मृतसूतकस्पृष्ट तत्स्वामिक वा यदन्नमित्यथः वसोर्वसुनाम्नो देवस्य पवित्रं पावयितृ, अग्निर्वैश्वानरः सवितुश्च रश्मयो मम मद्भोज्य तदन्नं पुनन्तु पवित्रयन्तु यदन्यच्च मम दुष्कृतं पापाचरणं तच्च पुनन्त्वित्यर्थः। अनेन मन्त्रेण स्वभोज्यमन्नमभिमन्त्र्य पश्चात् "अद्भिः ० दधाति" इति। पुरस्तात् प्राणाहुत्यारम्भात् पूर्व याः स्मृतिप्राप्ता आपो-ऽशनाङ्गभूता आपस्ताभिः परिदधाति प्राणादित्यरूपस्य स्वात्मनः परिधानं वस्त्राच्छादनमिदं क्रियत इति ताश्चिन्तये-

स्तात्परिदधाति। प्राणाय स्वाहापानाय स्वाहा व्यानायस्वाहा समानाय स्वाहोदानाय स्वाहेति पञ्चभिरभिजुहोति। अथावशिष्टं यतवागश्नात्यतो- ऽद्भिर्भूयएवोपरिष्टात्परिदधात्याचान्तो भूत्वात्मेज्यानः प्राणोऽग्निर्विश्वोऽसीति च द्वाभ्यामात्मानमभिध्यायेत्।

दित्यर्थः। अनन्तरकर्तव्यं प्राणाग्निहोत्रं मन्त्रविनियोगेन विधत्ते "प्राणाय ० अभिजुहोति" इति। प्राणाय स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैर्यथापाठक्रमं भोज्यान्नरूपं सिद्धं द्रव्यमादायाभि- मुख्येनास्याग्नौ जुहोति जुहुयादित्यर्थः। "अथावशिष्टं ० अभिध्यायेत्" इति। अथ पञ्चप्राणाहुत्यनन्तरमवशिष्टं तृप्ति- पर्यन्तमन्न यतवाक् मौनी सन्नश्नाति यदवशिष्टमश्नाति तन्मौनी सन्निति मौनमत्र विधीयते नाशनं, तस्य निमित्ता- न्तरत एव प्राप्तत्वादित्यर्थः। अतोऽवशिष्टसर्वान्नभोजनानन्त- रमद्भिरुत्तरापोऽशनाङ्गभूताभिर्भूय एव पुनरपि पूर्ववदुपरि- ष्टादुपरिभागे परिदधाति तास्वप्यूपरि परिधानदृष्टिं कुर्या- दित्यर्थः। तथा च श्रुत्यन्तरं 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चो- परिष्टाच्चाद्भिः परिदधति' (छान्दो० अ० ५) इति पश्चादुत्था- याऽऽचान्तो भूत्वा करमुखपादशुद्धिं विधाय विधिवदाचम्य शुद्धो भूत्वाऽऽत्मेज्यान आत्मानभोजान आत्मयजनं कुर्वन्नुपासक इति यावत् प्राणोऽग्निरित्यादिवक्ष्यमाणाभ्यां मन्त्राभ्यामात्मा- नमभिध्यायेत्। मन्त्रद्वयं पठति "प्राणोऽग्निः परमात्मा वै

प्राणोऽग्निः परमात्मा वै पञ्चवायुः समाश्रितः। स प्रीतः प्रीणातु विश्वं विश्वभुक्। विश्वोऽसि वैश्वानरोऽसि विश्वं त्वया धार्यते जायमानं। विशन्तु त्वामाहुतयश्च सर्वाः

---

"अमृतोऽसीति" इति। पञ्चवायुः प्राणापानादिपञ्चवायुरूपः प्राणः प्रणेता शरीरेन्द्रियव्यापारयिता यः स परमात्मा वै परमात्मैवा अग्निरन्नस्यात्ता जाठरो देहं समाश्रित इति पूर्वार्द्धयोजना। यद्वा परमात्मैव देहं समाश्रितः सन् पञ्चवायुः प्राणोऽग्निश्च नान्य इति योजना। अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति भगवत्स्मरणात्। स परमात्माऽत्ता प्रीतस्तृप्तः सन् विश्वं सर्वमेव भोक्तृवर्गं प्रीणातु प्रीणयतु यतः स विश्वभुक् विश्वं भुनक्ति पालयति इति विश्वभुगिति प्रथममन्त्रार्थः। हे प्राणान्यात्मन् त्वं विश्वोऽसि सर्वोऽसि वैश्वानरो विश्वनरनयनादीश्वरस्त्वमसीत्यर्थः। कुतो विश्वात्मत्वं विश्वनियन्तृत्वं चेत्यत आह, विश्वं जायमानं त्वया धार्यते त्वमेव स्वात्मनो विश्वमुत्पाद्य पालयसि इत्यर्थः। सर्वा आहुतयः आ समन्ताद्धूयन्त इत्याहुतयो हवींषि सर्वाणि त्वां विशन्तु त्वय्याहिता भवन्तु। किञ्च तत्र सर्वाः प्रजाः यत्र त्वं विश्वामृतोऽपि विश्वममृतयसि जीवयसीति विश्वामृतस्त्वं यत्र तत्रैव सर्वाः प्रजाः त्वज्जीवना इत्यर्थः। इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः। इदानीमेवंविधं विद्-

**प्रजास्तत्र यत्र विश्वाम्नतोऽसीति। एवं न विधिना खल्वनेनात्ताऽन्नत्वं पुनरुपैति ॥ ६ ॥**

**अथापरं वेदितव्यमुत्तरो विकारोऽस्यात्मयज्ञस्य यथान्नमन्नादश्चेत्यस्योपव्याख्यानं। पुरुषश्चेता प्रधानान्तःस्थः स एव भोक्ता प्राकृतमन्नं भुङ्क्ता इति।**

---

द्भोजनं फलवचनेन प्रशंसति "एवं न विधिना ० पुनरुपैति" इति। एवमुक्तप्रकारेणानेन विधिनाऽत्ता विद्वान् पुनरन्नत्वं न खलूपैतीत्यन्वयः। स्वयं सर्वस्यात्ता भवति नान्येनाद्यत इत्यर्थः ॥ ६ ॥

पुनरस्यैव विदुषश्चिन्तनीयान्तरं विशेषमाख्यातुमारभते "अथापरं ० व्याख्यानं" इति। अथेत्यर्थान्तरोपक्रमार्थः। अपरं पूर्वोक्तात् कर्ममन्त्ररूपादन्यद्वेदितव्यं चिन्तयितव्यमस्तीत्यर्थः। किं तदित्युच्यते अस्यात्मयज्ञस्यात्मयजनरूपस्य भोजनस्य सम्बन्धी उत्तरो विकारो विकरणं श्रेष्ठं विभजनं। कोऽसौ यथान्नमन्नादश्च अदनीयमत्ता चेति विभजनं। कथमित्यत आह, तस्योपव्याख्यानमिति। तस्योत्तरविकारस्य सामीप्यव्याख्यानं क्रियत इति शेषः। वक्ष्यमाणविभागेनान्नमन्नादं चात्मानं चिन्तयेदिति तात्पर्यार्थः। तत्र किमन्नं किमन्नादमित्येतत् तावत्स्वरूपतो निर्दिशति "पुरुषश्चेता ० भुङ्क्ता इति" इति। प्रधानं प्रकृतिर्जगद्बीजमव्याकृतादिशब्दवाच्यं तस्यान्तर्मध्ये तत्साक्षित्वेन स्थितो यश्चेता चेतनः पुरुषः स एव

तस्यायं भूतात्मा ह्यन्नमस्य कर्ता प्रधानः। तस्मात त्रिगुणं भोज्यं भोक्ता पुरुषोऽन्तःस्थः। अत्र दृष्टं नाम प्रत्ययं। यस्माद्बीजसम्भवा हि पशवस्तस्माद्बीजं भोज्यमनेनैव प्रधानस्य भोज्यत्वं व्याख्यातं। तस्मा-

---

भोक्ता प्राकृतं प्रकृतिकार्यमन्नं भुङ्क्ते इत्यर्थात प्रकृतितद्विका-रावन्नमित्यन्नान्नादस्वरूपमुक्तमित्यर्थः। अर्थादुक्तमन्नस्वरूपं विभजते "तस्याय भूतात्मा ० कर्ता प्रधानः" इति। तस्य प्रवोक्तस्य भोक्तुरयं भूतात्मा साभासः कार्यकरणसङ्घातरूपोऽन्नं भोज्यं हि प्रसिद्धं, अस्य भूतात्मनः कर्ता प्रधानः प्रवोक्तः. सोऽपि भोज्य इत्यर्थः। उक्तार्थसारमुपसंहारव्याजेनाह "तस्मात् त्रिगुणं ० पुरुषोऽन्तःस्थः" इति। त्रिगुण प्रधानतत्कार्य-रूपं भोज्यं भोक्ता पुरुषः प्रधानान्तःस्थः सर्वत्रेत्यर्थः। उक्त-व्यवस्थायां प्रमाणमाह "अत्र दृष्टं ० प्रत्ययं" इति। दृष्टं दर्शनं प्रत्यक्षं नाम प्रसिद्ध प्रत्ययं प्रमाणमत्र विद्यत इति शेषः। उक्तमर्थमुदाहरणेन बुद्धिमारोहयति "यस्माद्बीज-सम्भवा ० भोज्यत्वं व्याख्यात" इति। पशवो हि गवाश्व-महिषपुरुषादयः कुटुम्बिकस्य भोज्यत्वेन प्रसिद्धा यस्माद्बीज-सम्भवाः स्वबीजभूतान्नरसपरिणामादिसम्भवास्तस्माद्बीजं भोज्यो-पादानत्वाद्भोज्यं प्रसिद्धमित्यर्थः। बीजस्य भोज्यत्वप्रदर्शनफल-माह, अनेनेति। कार्येषु भोज्यत्वस्य सिद्धत्वात् कारणस्यापि तत्सिद्धं कार्यकारणयोरभेदादित्यर्थः। प्रमाणेनोपपादितमर्थमुप-

**द्भोक्ता पुरुषो भोज्या प्रकृतिस्तत्स्थो भुङ्क्ते इति। प्राकृतमन्नं त्रिगुणभेदपरिणामत्वान्महदाद्यं विशेषान्तं लिङ्गं। अनेनैव चतुर्दशविधस्य मार्गस्य**

---

संहरति "तस्माद्भोक्ता ० प्रकृतिस्तत्स्थो भुङ्क्ते इति" इति। व्याख्यातार्थोऽयं ग्रन्थः। एवं प्रकृतेर्भोज्यत्वं प्रसाध्य तत्कार्यस्य भोज्यत्वं प्रपञ्चयति "प्राकृतमन्नं ० विशेषान्तं लिङ्गं" इति। यत् प्राकृतं प्रकृतिप्रभवं कार्यरूपमन्नं तत् त्रिगुणभेदपरिणामत्वात् सत्त्वादिगुणविशेषपरिणामत्वान्महदाद्यं महान् प्रकृतेराद्यो विकारो ज्ञानक्रियाशक्तिसम्मूर्च्छितः स आद्यो यस्य तन्महदाद्यं। विशेषाः विकारशब्दवाच्याः पृथिव्यादिमहाभूतलक्षणा अस्मदादिप्रत्यक्षयोग्या अन्तो यस्य तद्विशेषान्तं। तत् कीदृशं, लिङ्गं लिङ्ग्यते ज्ञायते चेतनसद्भावोऽनेनेति व्युत्पत्तेः अचेतनं भोज्यमित्यर्थः। विषयाणां विशेषाविशेषरूपो विभागः साङ्ख्यैरुक्तः 'तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः। एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च' (सां०का०) इति। विशेषाविशेषरूपाणां विषयाणां भोज्यत्वं सामान्येनोक्तं प्रत्येकमिन्द्रियार्थेषु योजयति "अनेनैव चतुर्दश ० व्याख्या कृता भवति" इति। बाह्येन्द्रियप्रवृत्तिमार्गो दशविधोऽन्तःकरणवृत्तेश्चातुर्विध्यात्तस्याश्चतुर्विधो मार्ग इति चतुर्दशविधो मार्गस्तस्याऽपि भोज्यत्वेन व्याख्या कृता भवतीत्यर्थः। प्रतिपादि-

**व्याख्या कृता भवति। सुखदुःखमोहसंज्ञं ह्यन्नभूतमिदं जगत् नहि बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्न प्रसूतिः। तस्याप्येवं तिस्रश्चवस्थास्वन्नत्वं भवति कौमारं यौवनं जरा परिणामत्वात् तदन्नत्वं। एवं प्रधानस्य व्यक्ततां गतस्योपलब्धिर्भवति तत्र बुद्ध्यादीनि**

तार्थं श्लोकेन संगृह्णाति "सुखदुःखमोहसञ्ज्ञ ० यावन्न प्रसूतिः" इति। सुखदुःखमोहकरत्वात् त्रिगुणात्मकमिद जगत्सुखादिसञ्ज्ञितमन्नभूतं हि प्रसिद्धमित्यर्थः। बीजस्य यत्स्वाद स्वादनं तस्य परिग्रहस्तावन्न भवति यावत्कार्याकारेण न प्रसूतिः प्रसवः। तस्मात्कार्यं त्रिगुणात्मक भोज्य दृष्ट्वा कारण प्रधानमपि त्रिगुणात्मक भोज्यमनुमेयमित्यभिप्रायः। यदुक्त पूर्वं प्रकृतिकार्यस्य भूतात्मनोऽन्नत्वं तस्याप्यवस्थावत्त्वात्परिणामित्वमस्तीति त्रिगुणात्मकत्वमन्नत्वञ्च सिद्धमित्याह "तस्याप्येव ० जरा परिणामत्वात्तदन्नत्व" इति। अवस्थात्रयमेव विभजते कौमारमित्यादिना। अवस्थात्रयस्य कार्यत्वं साधयति, परिणामत्वादिति। तदन्नत्वं तस्य भूतात्मनोऽन्नत्वं सिद्धमित्यर्थः। कार्यद्वारोक्त प्रधानभोज्यत्वं प्रपञ्चयति "एवं प्रधानस्य ० प्रसिद्धं तस्य" इति। एव वक्ष्यमाणेन प्रकारेण प्रधानस्य व्यक्ततां गतस्य कार्यतामापन्नस्योपलब्धिर्भवति, कथं तदाह तत्र व्यक्तेषु प्रधानकार्येषु यत्स्वाद स्वादन-

**स्वादूनि भवन्त्यध्यवसायसङ्कल्पाभिमाना इत्यथेन्द्रियार्थान् पञ्च स्वादूनि भवन्त्येवं सर्वाणीन्द्रियकर्माणि प्राणकर्माण्येवं व्यक्तमन्नमव्यक्तमन्नमस्य निर्गुणो**

---

मास्वादनं ग्रहणमिति यावत् तस्मिन् स्वादूनि तन्निमित्तं बुद्ध्यादीनि करणानि भवन्ति प्रवर्तन्ते, बुद्ध्यादिभिः प्रधानकार्यं गृह्यत इत्यर्थः। बुद्ध्यादिस्वरूपं मध्ये व्यपदिशति, अध्यवसाय इति। निश्चयात्मिका बुद्धिरध्यवसायः, सङ्कल्पनव्यापारवदन्तःकरणं मनः सङ्कल्पः, अहङ्कारात्मिकान्तःकरणवृत्तिरभिमान इत्येते बुद्ध्यादिशब्दार्था इत्यर्थः। अथ बुद्ध्याद्युद्भवे जाग्रद्दशायामिति यावत् इन्द्रियार्थान् शब्दस्पर्शरूपरसगन्धाख्यान् विषयान् प्रति पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पूर्ववत् स्वादूनि भवन्ति उक्तान् विषयान् स्वदयितुं करणानि भवन्तीत्यर्थः। उक्तमर्थं कर्मेन्द्रियेषु मुख्यप्राणे वाऽतिदिशति, एवमिति। सर्वाणि वाक्पाणिपादपायूपस्थाख्यानामिन्द्रियाणां कर्माणि प्राणस्य मुख्यस्य कर्माणि प्राणनापाननादीनि वचनादानगमनविसर्गानन्दान् शरीरचालनादीन् प्रति स्वादूनि भवन्तीति योजना। प्रपञ्चितमर्थमुपसंहरति, एवमिति। एवमुक्तप्रकारेण व्यक्तमन्नं सिद्धं, व्यक्तरूपान्नकारणत्वादव्यक्तस्य व्यक्तवदेवाव्यक्तमप्यन्नमनुमेयमित्यर्थः। अस्य व्यक्ताव्यक्तरूपस्यान्नस्य निर्गुणो भोक्ता

**भोक्ता भोक्तृत्वाच्चैतन्यं प्रसिद्धं तस्य। यथाऽग्निर्वै देवानामन्नादः सोमोऽन्नमग्निनैवान्नमित्येवंवित* सोम-**

निर्विकार आत्मा भोक्तेत्यर्थः। अन्तःकरणगतचिदाभासाविवेकाद्भोक्तेव प्रतीयमानोऽपि न स्वभावतो भोक्ता कूटस्थ एव सर्वदेति भावः। तस्यात्मनो भोक्तृत्वाद्‌चेतनस्य सर्वस्य कार्यकारणात्मकस्य व्यक्ताव्यक्तवाच्यस्य सन्निधिसत्तामात्रेण स्वचैतन्याभासेन व्याप्तृत्वाच्चैतन्यं चेतनत्वं प्रसिद्धं प्रकर्षेण सिद्धं ज्ञातं भवतीत्यर्थः। इदानीमन्नात्तोक्तृयोः प्रकृतिपुरुषयोः सोमत्वमग्नित्वं च ध्यायेदिति गुणान्तरमुपदिशति "यथाऽग्निर्वै॰ आत्मयाजी चेति" इति। देवानां मध्येऽग्निरन्नादोऽन्नस्यात्ता वै प्रसिद्धो तथा तथा सोमोऽन्नमदनीय प्रसिद्ध इति योजना। तथा च श्रुत्यन्तरं 'अथ यत्किञ्चेदमार्द्र तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद' (बृहदा॰ अ॰ ३) इति। तथा चैववित् यदा यद्धिनाद्यते सोऽग्निर्यदद्यते स सोम †एवेत्यन्नात्मरूपमग्नीषोमात्मकं जगदित्येवंविदग्निनैवाग्न्यात्मनैव सोमरूपमन्नमत्ति। अतोऽन्नदोषैरग्निवन्न लिप्यत इत्यभिप्रायः। अन्नमित्येवमिति पाठः प्रामादिकः। यद्ययं पाठः सत्यस्तदेत्थं योजना अग्निरन्नादः सोमोऽन्नमिति यथा प्रसिद्धं श्रुत्यन्तरे तथैवाऽग्निनैव सोम-

* अन्नमत्त्येवंविदिति टीकायां सम्मतः पाठः

† एवेत्यन्नरूपमिति समीचीनः पाठः

**संज्ञोऽयं भूतात्माऽग्निसंज्ञोऽप्यव्यक्तमुखा इति वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्त इति यो हैवं वेद सन्न्यासी योगी चात्मयाजी चेत्यथ यद्वन्न कश्चिच्छून्या-**

---

रूपमन्नमद्यते न मयेत्येवंविदन्नदोषैर्न लिप्यत इति। आधिभौतिकान्नान्नादयोरुक्तं विशेषमाध्यात्मिकयोरपि तयोर्दर्शयति, सोमेति। अयं भूतात्मा प्राकृतः केवलः सोमसंज्ञोऽन्नमित्यर्थः, अव्यक्तं प्रधानं मुखं भोक्तृत्वादिप्रवृत्तिद्वारं यस्य स चिदात्माऽव्यक्तमुखस्तेन व्याप्तत्वाद्भूतात्माप्यव्यक्तमुखः सन्नग्निसंज्ञोऽपि भवति। तथा चायमर्थः, चिदाभासव्याप्ततया चिदात्माभेदेनाव्यक्तमुखतया बाह्यविषयभोक्तृत्वेनाग्निसञ्ज्ञोऽप्ययं भूतात्मा चिदात्मापेक्षया सोमसंज्ञोऽन्नमेवेति प्रकृत्यनुगतश्चिदात्माऽत्ताग्निः प्राकृतो भूतसङ्घातोऽन्नमिति चिन्तयेदिति। एतमुक्त विभागे प्रमाणमाह, वचनात्पुरुष इति। भुङ्क्त इति वचनादित्यन्वयः। एवमन्नान्नादविदं प्रशंसन्नस्मिन् दर्शने पुंसः प्रवृत्तिमुपनयति, यो हैवमिति। यो ह कश्चिदेवमुक्तप्रकारेणान्नान्नादविभागं वेद, स इत्यध्याहार्य्यं, स सन्न्यासी अकर्त्रात्मदर्शी, न केवलं कर्म्मत्यागी सन्न्यासी किन्त्वयमेवेति विद्या स्तूयते, योगी चाष्टाङ्गयोगनिरतोऽप्ययमेव, न केवलं गुहासु निविष्टः, आत्मयाजी आत्मसंस्कारार्थं यो यजते स आत्मयाजी तथा च शातपथी श्रुतिः 'स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इति। आत्मयाजी

गारे कामिन्यः प्रविष्टाः स्पृशन्तीन्द्रियार्थांस्तद्वद्यो न स्पृशति प्रविष्टान् सन्यासी योगी चात्मयाजी चेति ॥ ॥ १० ॥

परं वा एतदात्मनो रूपं यदन्नमन्नमयो ह्ययं प्राणोऽथ न यद्यस्नात्यमन्ताऽश्रोताऽस्पृष्टाऽद्रष्टाऽवक्ताऽघ्राता-

चायमेव न यज्ञमात्रनिरत इत्यर्थः। के वा सन्यासी योगी चात्मयाजी चेति प्रसिद्धा यदात्मनायं विद्वान् स्तूयत इत्यपेक्षायां तत्स्वरूपमाह, अथ यद्वदिति। अथेदं निदर्शनमुच्यते। शून्यागारे जनशून्यान्तर्भवने प्रविष्टाः कामिन्यः कामिनीः कामातुराः स्त्रीः कश्चिदतिधीरो न स्पृशति यद्वत् किन्तु ताः परिहरत्येव तद्वद्यो विद्वानिन्द्रियार्थान् प्रविष्टान् दैवादागत्योपस्थितान्न स्पृशति अनुरागेण न स्वीकरोति स एव सन्यासी योगी चात्मयाजी चेति व्याख्यातं। इति शब्दः प्रदर्शनार्थः। विषयनिस्पृहाः सन्यास्यादिशब्दवाच्या इत्यर्थः ॥ १० ॥

तदेवं दशभिरनुवाकैरध्यात्ममधिदैवञ्च प्राणादित्योपाधिद्वाराऽऽत्मोपासनं सेतिकर्तव्यताक्रममुक्तिफलमुपदिश्य तत्परिसमाप्येदानीं पूर्वप्रकृतस्यैव प्रत्यग्ब्रह्मणश्चिदात्मनोऽभ्युदयफलकमनेकविधमुपासनभेदं वक्तुं प्रकरणान्तरं प्रवर्तते। तत्रान्नाधीनत्वात् सर्वप्राणिस्थितेर्ब्रह्मदृष्ट्यान्नोपासनं विधातुं तन्महिमानमाह “परं वा ० यन्त्यन्ततः” इति। परमुत्कृष्टं वै प्रसिद्ध-

रसयिता भवति प्राणांश्चोत्सृजतीत्येवं ह्याहाथ यदि खल्वश्नाति प्राणसमृद्धो भूत्वा मन्ता भवति श्रोता भवति स्प्रष्टा भवति वक्ता भवति रसयिता भवति घ्राता भवति द्रष्टा भवतीत्येवं ह्याह अन्नाद्वै

---

मेतद्वक्ष्यमाणमात्मनः परमात्मनो रूपं मूर्तिविशेषः । किं तद्यदन्नं सर्वप्राणिजीवनं प्रसिद्धमोदनादिरूपं । कथमस्य परत्वं, हि यस्मादयं प्राणो मुख्यप्राणप्रधानोऽयं सङ्घातोऽन्नमयोऽन्नजीवन इति यावत् । एतदेवान्वयव्यतिरेकाभ्यामुपपादयति । अथैतत्प्रपञ्च्यते, यद्ययं नाश्नाति नान्नमुपजीवति तदा अमन्ता मननासमर्थो भवतीत्यन्वयः । एवमश्रोता भवतीत्यादि योज्यं । न केवलं मननाद्यशक्तिमात्रमेवानश्नतः किन्तु जीवनमपि दुर्लभमित्याह, प्राणांश्चोत्सृजति परित्यजति म्रियत इत्येवं ह्याह श्रुतिः । तथा च छान्दोग्ये (अ० ७) 'अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोता' इत्याद्यन्नाभावे शक्तिजीवनयोरभाव इति व्यतिरेकमुक्त्वा तत्रैवान्वयमाह, अथेति । यदि अश्नाति तदा खलु प्राणसमृद्धः प्राणेन बलेन समृद्ध उपचितो भूत्वा मन्ता भवतीत्यादि स्पष्टं । अत्रैव श्रुत्यन्तरमुदाहरति, एवं ह्याहेति । अन्नाद्रेतोबीजरूपपरिणताद्वै प्रजाः स्थावरजङ्गमात्मिकाः प्रजायन्ते उत्पद्यन्ते याः काश्चिदविशेषिताः पृथिवीश्रिताः पृथिवीमाश्रिता अत

प्रजाः प्रजायन्ते याः काश्चित् पृथिवीश्रिताः अतोऽन्ने-
नैव जीवन्त्यथैतदपि यन्त्यन्ततः ॥ ११ ॥

अथान्यत्राप्युक्तं सर्वाणि ह वा इमानि भूतान्यह-
रहः प्रपतन्त्यन्नमभिजिघ्रक्षमाणानि सूर्यो रश्मिभिरा-

उत्पत्त्यनन्तरमप्यन्नेनैव स्वस्वजात्युचितेनादनीयेनैव जीवन्ति प्राणान् धारयन्ति। अथ जीवितक्षये अन्ततोऽन्ते शरीराव साने ऽप्येतदन्नमेवापि यन्ति अन्नात्मिकायां पृथिव्यां लीयन्त इत्यर्थः ॥ ११ ॥

पुनरप्यन्नस्तुतिं करोति तस्य वक्ष्यमाणात्मदृष्ट्यर्हत्वाय "अथा न्यत्राप्युक्तं • ब्रह्मणा" इति। ह वै इति प्रसिद्धार्थौ निपातौ सर्वाणीमानि भूतानि पशुपक्ष्यादिपिपीलिकान्तानि अन्नमभि जिघृक्षमाणानि अहरहर्नित्यं प्रपतन्तीतस्ततः परिभ्रमन्तीति प्रसिद्धमेतदित्यर्थः। किञ्च सूर्योऽपि रश्मिभिः किरणैरन्न भौमं रसरूपमाददाति स्वीकरोति, तेनान्नादानेनासौ सूर्य-स्तपति समिद्धो भवतीत्यर्थः। तथा च श्रुत्यन्तरं 'सूर्यो मरीचिमादत्ते सर्वस्माद्भुवनादधि' इति। मरीचिं मरीचि-ग्रस्तमुदकमित्यर्थः। इमे प्राणा मुख्यप्राणसहिता वागादयः प्राणाः अन्नेनाभिषिक्ताः संक्लिन्नाः सन्तर्पिताः सन्तः पचन्ति वर्ण-व्यत्ययेन पतन्ति स्वस्वव्यापारं कुर्वन्तीत्यर्थः। यद्वा पचन्ति भोक्तुर्विषयानुपनयन्तीत्यर्थः। तथाऽग्निर्वा अन्नेन समिदाज्यादि-

दधात्यन्नं तेनासौ तपत्यन्नेनाभिषिक्ताः पचन्तीमे प्राणा अग्निर्वा अन्नेनोज्ज्वलत्यन्नकामेनेदं प्रकल्पितं ब्रह्मणा। अतोऽन्नमात्मेत्युपासीतेत्येवं ह्याह। अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥ १२ ॥

अथान्यत्राप्युक्तं विश्वभृद्वै नामैषा तनूर्भगवतो

---

नाऽभिज्वलति दीप्यते। एवं देवतानामप्युपजीव्यमिदमन्नमन्नकामेन ब्रह्मणा प्रजापतिना प्रकल्पितमुत्पादितमित्यर्थः। यदर्थमेवमन्नं स्तुतं तदिदानीमुपासनं विदधाति "अतोऽन्नं० ह्याह" इति। यत एवमाहिमेदमन्नमतोऽन्नमात्मेत्युपासीत ध्यायेदित्यर्थः। अत्र ब्रह्मदृष्टिरुत्कर्षादिति न्यायेनान्ने आत्मदृष्टिर्विधीयते, न चात्राहंग्रहोऽस्ति 'न प्रतीकेन हि सः' (ब्रह्मसू० अ० ४। पा० १। सू० ४।) इति सूत्रे प्रतीकेष्वहंग्रहस्यापोदितत्वादिति द्रष्टव्यं। एवं ह्याहेत्युदाहरति शाखान्तरीयं मन्त्रमन्नस्यात्मसाम्यद्योतनेन तत्प्रतीकत्वं द्रढयितुं "अन्नाद्भूतानि० तदुच्यते" इति भूतोत्पत्त्यादिनिमित्तत्वमात्मसाम्यमत्रोक्तं। अक्षरार्थः स्पष्टः ॥ १२ ॥

इदानीमन्ने पूर्वोक्ते विश्वभृत्त्वं गुणं प्रक्षिप्य विष्णुशरीरदृष्ट्योपासनान्तरमुपदिशति "अथान्यत्राप्युक्तं० भिषक् स्मृतं" इति। विश्वभृत्त्वमन्नस्य साधयति, प्राणो वा इत्यादिना।

विष्णोर्यदिदमन्नं प्राणो वा अन्नस्य रसो मनः प्राणस्य विज्ञानं मनस आनन्दं विज्ञानस्येत्यन्नवान् प्राणवान् मनस्वान् विज्ञानवानानन्दवांश्च भवति यो हैवं वेद यावन्तीह वै भूतान्यन्नमदन्ति तावत्स्वन्तःस्थोऽन्नमत्ति यो हैवं वेद। अन्नमेव विजरन्नमन्नं संवननं

रसः सारः कार्यमित्यर्थः। प्राणे स्थिरे सति मनस उपचयान्मनः प्राणस्य च रसः। मनसो विवेकसामर्थ्ये सति विज्ञानोत्पत्तेर्विज्ञानं मनसो रसः, विषयाध्यवसाये सत्यानन्दोदयाद्विज्ञानस्यानन्दो रस इति यो हैवं वेदेति सम्बन्धः। *सो भवान् प्राणवानित्यादिफलवचनं। दृष्टं फलमुक्ताऽदृष्टं च फलमाह, यावन्तीहेति। यावन्तीह लोके भूतान्यन्नमदन्ति भक्षयन्ति तावत्सु सर्वेषु तेषु भूतात्मा सन्नन्तःस्थो भूतान्तःस्थोऽन्नमत्तुपासकः। †तावत्स्वन्तदस्य इति पाठे तेषु भूतेष्वस्थितस्तेष्वभिमानशून्यः सन्नन्नमत्तीत्यर्थः। कः, यो हैवं विश्वभृद्रूपं विष्णुतनुमन्नं वेदोपास्ते इत्यर्थः। उक्तमुपास्यमन्नं विष्णुतनुत्वदृष्ट्यर्हत्वाय स्तुत्यर्थं श्लोकमुदाहरति, अन्नमेवेति। अन्नमेव विजरत् विजरत्वं नयतीति विजरन्नं विजरमेव वा विजरन्नं। तथा च श्रुत्यन्तरं अन्नं ब्रह्माणोऽजरं वदन्तीति। तथा अन्नं संवननं

---

* सोऽन्नवान् इति समीचीनः पाठः।

† तावत्स्वन्तरस्थ इति भवितुमर्हति।

स्मृतं। अन्नं पशूनां प्राणोऽन्नं ज्येष्ठमन्नं भिषक् स्मृतं ॥ १३ ॥

अथान्यत्राप्युक्तमन्नं वा अस्य सर्वस्य योनिः काल-

---

सम्भजनीय स्मृतं ज्ञातं। अन्नं बहु कुर्वीत तद्व्रतमिति श्रुत्यन्तरात्। अन्नं पशूनां प्राणिनां प्राणः, अन्नात् प्राणा भवन्तीति श्रुतेः। अन्नं ज्येष्ठं प्रथमजं रसाद्यपेक्षया पूर्वसिद्धत्वात्। अन्नं हि भूतानां ज्येष्ठमिति श्रुत्यन्तरात्। अन्नं भिषक् भेषजं चुद्व्याधिनिवर्तकं स्मृतं, तस्मात् सर्वौषधमुच्यत इत्यन्नं प्रकृत्य श्रवणादिति श्लोकार्थः ॥ १३ ॥

पुनरस्यैवात्मनः कालात्मकादित्ये दृष्टिं विधातुमुत्तरमनुवाकत्रयं प्रवर्तते, तत्रान्नस्य कालाधीनत्वात् कालस्य चादित्याधीनत्वादन्नोपासनानन्तरं कालादित्योपासनविधानमिति संगतिं विवृण्वन् कालात्मानं स्तौति "अथान्यत्राप्युक्तमन्नं ० इत्येवं ह्याह" इति। अथेत्युपासनान्तरोपक्रमार्थः। अन्यत्रापि कालविषये इदमुक्तं, अन्यत्राप्युक्तमिति वा। अन्नं वै प्रसिद्धमस्य प्राणिजातस्य सर्वस्याशेषस्य योनिः कारणं, कालश्चान्नस्य योनिरित्यनुवर्तते, कालेन ह्यन्नं प्रसूयते, सूर्यः सविता कालस्य योनिः, तस्य हि कालनिर्मातृत्वं प्रसिद्धं। तत्र कालस्वरूपतत्प्रमाणयोरभावात्कथं कालोऽन्नस्य योनिरित्यत आह तस्यैतदित्यादिना। तस्य कालस्यैतद्रूपं रूप्यत इति रूपं स्वरूपं, किं तत् यन्निमेषादेर्निमेषकलाकाष्ठाद्यवयवप्रचयात् संभृतं

**ऽन्नस्य सूर्यो योनिः कालस्य तस्यैतद्रूपं यन्नि-मेषादिकालात् सम्भृतं द्वादशात्मकं वत्सरमेतस्याग्ने-यमर्द्धमर्द्धं वारुणं मघाद्यं श्रविष्ठार्द्धमाग्नेयं क्रमेणो-**

-

घटित द्वादशमासात्मकत्वात् द्वादशात्मकं वत्सरं संवत्सररूप-मस्ति, एतत् तस्य रूपमिति सम्बन्धः। तथा चोक्तं श्रीभागवते 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वं। निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये' इति। निमेषादिसंवत्सरान्तव्यवहाराश्रयः काल इति कालस्वरूपमुक्तं भवति। इदानीमुक्तलक्षणः संवत्सराख्यः कालस्तदवयवैरेव प्रमेय इति विवक्षंस्तावत्कालावयवान् स्थूलतमादिक्रमेण व्युत्पाद-यति, एतस्येत्यादिना। एतस्य संवत्सरात्मनः कालस्य द्वादश मासाः संवत्सर इति श्रुतेर्द्वादशमासात्मकस्यार्द्धमुत्तरायण-षण्मासरूपमाग्नेयमग्निदैवत्यमौषधप्रधानत्वादस्य षण्मासस्य। अर्द्धं वारुणं वरुणदैवत्यं दक्षिणायनषण्मासरूपं जलप्रधानत्वादस्य षण्मासस्येत्यर्थः। तथा च तापोदकयोः कार्ययोः पर्यायेण नियतप्रवृत्त्यन्यथानुपपत्त्या यस्तद्धेतुभूतोऽर्थः कल्प्यते स काल उभयायनानुगतः संवत्सरात्मा सिद्ध इत्यर्थः। इदानीमयनाव-यवभूतान् मासान् व्युत्पादयिष्यंस्तदुपोद्घाततया नाक्षत्रमयनद्वय प्रकल्प्य तद्द्वारा कालसद्भावकल्पनामाह, मघाद्यमिति। मघा-नक्षत्रमारभ्य श्रविष्ठाख्यनक्षत्रस्यार्द्धमर्द्धावसानं यावत् सवितः

त्क्रमेण सार्पाद्यं श्रविष्ठार्द्धान्तं सौम्यं तत्रैकैकमात्मनो नवांशकं सचारकविधं सौक्ष्म्यत्वादेतत्प्रमाणमनेनैव प्रमीयते हि कालो न विना प्रमाणेन प्रमेयस्योप-

---

क्रमेण नीचैः क्रमणेन स्वचारगत्या भुङ्क्ते तावदाग्नेयमग्निदेवत्यं, तत्र हि कालेऽग्निर्देव इव शीतार्त्तैर्मनुष्यैरुपास्यते तथा सार्पाद्यं सर्पदेवत्यमश्लेषानक्षत्रं सार्पं, तत्प्रभृतिश्रविष्ठोत्तरार्द्धान्तं यावत् सविता उत्क्रमेणोर्द्धमार्गक्रमणेन स्वचारगत्या भुङ्क्ते तावत् सौम्यं सोमदेवत्यं तस्मिन् हि काले चन्द्रस्तापार्त्तैर्मनुष्यैर्देव इवोपास्यत इति। अत्र श्रविष्ठार्द्धाद्यं सार्पान्तमिति यद्यपि वक्तुमुचितं तथापि यथा विभक्तयोः समययोः स्वभाववैलक्षण्यस्पष्टीकरणार्थं सार्पाद्यमित्युक्तं श्रविष्ठायां सवितरि वर्तमाने शीतानुवृत्तेस्तदाद्यग्रहणे हि न स्पष्टः स्वभावभेदो निर्दिष्टः स्यादितरत्र तु स्पष्टस्तत्र तापप्राचुर्ये विवादाभावात्, तथा च स्वभावभेदप्रकटीकरणायाऽऽर्थ एव क्रमो विवक्षितो न नक्षत्रपाठक्रम इति भावः। अत्रापि शीतोष्णयोर्नियतप्रवृत्तिहेतुकालकल्पना पूर्ववत् द्रष्टव्या। इदानीमुक्तैः सप्तविंशतिनक्षत्रैर्द्वादशराश्यवच्छेदेन मासक्लृप्तिमाह, तत्रेति। तत्र तेषु नक्षत्रेषु नव अंशा यस्मिंस्तन्नवांशकं, यदेकैकं नवांशकं तदात्मनः संवत्सरात्मन एकैकोऽवयव इति योज्यं। अंशः पादः नवांशा नव पादाः सपाद-

लब्धिः प्रमेयोऽपि प्रमाणतां पृथक्त्वादुपैत्यात्मसम्बोधनार्थमित्येवं ह्याह। यावत्यो वै कालस्य कला-स्तावतीषु चरत्यसौ यः कालं ब्रह्मेत्युपासीत काल-स्तस्यातिदूरमपसरतीत्येवं ह्याह।

दनक्षत्रद्वयावच्छिन्न एको राशिः सूर्यगत्यनुसारेणैको मासः संवत्सरात्मनः कालस्यैकोऽवयव इत्युक्तं भवति। तथा च तत्तन्मासस्वभावभेदनियमेनापि कालकल्पनमुन्नेयं। एतत्सर्व सचारकविधं, चारश्चङ्क्रमणं नक्षत्रादिषु परिभ्रमणं, तत्र विधा प्रकारः, तया विधया सहितं सचारकविधं। एतच्च ज्योतिः-शास्त्रात् कलादिकालावयवगणनया सूर्यचारमालोच्य सर्वम-वधेयमिति तात्पर्यार्थः। उक्तैरेवावयवैः कालोऽनुमेय इत्यत्र हेतुमाह सौक्ष्म्यत्वादिति सूक्ष्मत्वादित्यर्थः। इन्द्रियागोचरत्वात् कालस्यैतत् पूर्वोक्तमयनादिरूपं प्रमाणं कालास्तित्वे. तत्रानुभवं संवादयति, अनेनैव हि पूर्वोक्तप्रकारेण कालः प्रमीयते सम्यगवधार्यते न प्रत्यक्षादिनेत्यर्थः। किमेवं प्रमाणोपन्या-सेनास्ति चेत् कालः स्वयमेव दृश्यतेति मन्दाशङ्कायामाह नेति, अनादिमायावच्छिन्नचिद्विलासरूपस्य कालस्य जडत्वात् प्रमेयान्तरवन्मानाधीनसिद्धिकत्वमित्यर्थः। यदि कालस्य प्रमेयत्वं तर्हि निमेषादीनामपि कालावयवानां कालत्वा-विशेषादभेदे सति कथं कालेन कालप्रमेत्यत आह

**कालात् स्रवन्ति भूतानि कालाद्वृद्धिं प्रयान्ति च ।**
**काले चास्तं नियच्छन्ति कालो मूर्तिरमूर्तिमान् ॥ १४ ॥**

**द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः प्रागादित्यात् सोऽकालोऽकलोऽथ य आदित्याद्यः स कालः**

---

प्रमेयोऽपीति । पृथक्त्वादवयवावयविभावेन भेदात् प्रमेयोऽपि प्रमाणत्वमुपैति प्राप्नोति, किमर्थं, आत्मनः स्वस्य सम्यग्बोधनार्थमवधारणार्थं दीपप्रकाशेन दीपानुमानवदित्यर्थः । एवं ह्याह, एवंविधः कालः सूर्याधीन इत्यत्रोदाहरणमाहेत्यर्थः । "यावत्यो वै ० अमूर्तिमान्" इति । यावत्यो वै प्रसिद्धाः कालस्य कला अंशास्तावतीष्वसौ सविता चरति तत्प्रवर्तकत्वेन विचरति ताः सम्पादयतीत्यर्थः । अतो यः कालं कलयितारं कालरूपमादित्यं ब्रह्मेत्युपासीत तस्योपासकस्यातिदूरं कालोऽपसरति सकृन्मृत्वा पुनर्मरणाय न जायते कालव्याप्यो न भवतीत्यर्थः । तत्र कालस्य ब्रह्मदृष्ट्यर्हत्वाय पुनरुदाहरणमेवं ह्याह कालात् स्रवन्तीत्यादि, पादत्रयं स्पष्टार्थं । कालो मूर्तिमूर्तिमानादित्यरूपेण, अमूर्तिमांश्च निमेषादिसंवत्सरान्तेन रूपेणेति चतुर्थपादार्थः ॥ १४ ॥

कालनिर्वर्तकत्वादादित्यः कालात्मको ब्रह्मदृष्ट्योपास्य इत्युक्तं, तत्र किं ब्रह्म निमेषादिकालेषु किमात्मकश्चादित्यो ब्रह्मदृष्ट्योपास्य इति वीक्षायामाह "द्वे वाव ० स वेदवित्"

सकलः सकलस्य वा एतद्रूपं यत् संवत्सरः संवत्सरात् खल्वेवेमाः प्रजाः प्रजायन्ते संवत्सरेणेह वै जाता विवर्धन्ते संवत्सरे प्रत्यस्तं यन्ति तस्मात् संवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा चेत्येवं ह्याह ।

कालः पचति भूतानि सर्वाण्येव महात्मनि ।
यस्मिंस्तु पच्यते कालो यस्तं वेद स वेदवित् ॥ १५ ॥

इति । प्रायः स्पष्टार्थोऽयमनुवाकः । प्रागादित्यादिति आदित्योत्पत्तेः प्राग् यद्ब्रह्मणो रूपं सोऽकालः, स न कस्यापि कलयिता यतोऽकलः कलारहित इत्यर्थः । अथ य आदित्याद्य आदित्य आद्यः प्रवर्तको यस्य स तथा, स कालः सकलः कलाभिः सहित इत्यर्थः । सकलस्य वै इति संवत्सरः सकलस्य कालस्य स्वरूपं । तस्योपास्यत्वाय ब्रह्मसाम्यमाह संवत्सरादिति । यस्मादेवं संवत्सरः सर्वकारणं तस्मात् संवत्सरो वै प्रसिद्धः प्रजापतिर्हिरण्यगर्भः सूर्यात्मा स कालः, सोऽन्नमन्नहेतुत्वात्, ब्रह्मणो नीडमालम्बनं ब्रह्मदृष्टियोग्यं प्रतीकमित्यर्थः । आत्मा च प्राणिनां 'सूर्य आत्मा' इति मन्त्रवर्णात् । एवं ह्याह मह्रांश्चासावात्मेति महात्मा अकालात्मक ईश्वरः, तस्मिन्महात्मनि सर्वाण्येव भूतानि कालः पचति जरयति पुरमात्मन्यधिष्ठाने तदायत्तः कालो भूतानि पचन् परिवर्तत इत्यर्थः । तथा च श्रुत्यन्तरं 'एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति'

विग्रहवानेष कालः सिन्धुराजः प्रजानां। एष तत्स्थः सविताख्यो यस्मादेवेमे चन्द्रर्क्षग्रहसंवत्सरादयः सूयन्तेऽथैभ्यः सर्वमिदमत्र वा यत्किञ्चित् शुभाशुभं *दृश्यन्तेह लोके तदेतेभ्यस्तस्मादादित्यात्मा ब्रह्माथ

---

(बृहदा० अ० ५। ब्रा० ८) इति। यस्मिंस्तु कालात्मा सविता पच्यते लीयते तं यो वेद स वेदरहस्यविदित्यर्थः ॥ १५ ॥

पुनरपि सकलं कालं स्तौति "विग्रहवानेष ० भाति मण्डले" इति। विग्रहवान् मूर्तिमानेष कालः पूर्वोक्तः प्रजानां सिन्धुराजः समुद्रः समुद्रवत् दुस्तर इति यावत्, एष सविताख्यो यस्मात् तत्स्थस्तस्मिन् काले निमित्ततया स्थितः। कोऽसौ सविताख्यः, यस्मादेव सवितुरिमे चन्द्रादयः सूयन्ते अभिषूयन्ते आप्यायन्ते स्वतेजःप्रवेशनेनेत्यर्थः। अथ प्रसिद्धमेभ्यश्चन्द्रादिभ्यः सर्वमिदं किं, यत्किञ्चित् शुभाशुभमिह लोके दृश्यते सुखदुःखादीत्यर्थः। तदेतेभ्यः आदित्यादिग्रहेभ्यो निमित्तभूतेभ्य इत्यर्थः। यस्मादेवमादित्यनिमित्ता जगत्स्थितिस्तस्मादादित्यात्मा ब्रह्म। यत एवम्प्रभाव आदित्योऽथ तस्मात् कालसञ्ज्ञमादित्यमुपासीतेत्येतद्विधिवाक्यं, कालसञ्ज्ञमादित्यं ब्रह्मेत्युपासीतेत्यर्थः। एके शाखिनः कालसञ्ज्ञालक्षणं गुणमणादृत्यादित्यो ब्रह्मेत्यादित्योपासनं ब्रह्मदृष्ट्या विदधति,

---

* उभयपुस्तक एष मूलपाठः।

कालसञ्ज्ञमादित्यमुपासीतादित्यो ब्रह्मेत्येकेऽथ एवं ह्याह ।

होता भोक्ता हविर्मन्त्रो यज्ञो विष्णुः प्रजापतिः ।
सर्वः कश्चित् प्रभुःसाक्षी योऽमुष्मिन् भाति मण्डले ॥ १६ ॥

ब्रह्म ह वा इदमग्र आसीदेकोऽनन्तः प्रागनन्तो दक्षिणतोऽनन्तः प्रतीच्यनन्त उदीच्यनन्त ऊर्द्ध्वा-

---

आदित्यो ब्रह्मेत्यादेश इत्यन्येत्यर्थः । सर्वथाप्यादित्यो ब्रह्मेत्येव ह्याह मन्त्रः । होता हविषः प्रक्षेप्ता यजमान ऋत्विग् वा, भोक्ता हविषः स्वीकर्ता देवताविशेषः, हविस्त्वर्वादिद्रव्यं, मन्त्र-स्तत्प्रक्षेपसाधनत्वेन विहितः, एतैः सर्वैः साध्यो यो यज्ञः स को विष्णुः, यज्ञो वै विष्णुरिति श्रुतेः । प्रजापतिः प्रजानां पाल-यिता ईश्वरः कर्मफलदाता, एवंविधो यो जगद्धेतुकलापः स सर्व एष एवेत्यध्याहारः, कः योऽमुष्मिन् दूरस्थे मण्डले भाति प्रकाशते, किंलक्षणः कश्चिदेकः यः कश्चिदिति वा सम्बन्धः, प्रभुः स्वतन्त्र ईश्वरः, साक्षी साक्षात् सर्वद्रष्टेत्यर्थः ॥ १६ ॥

इदानीमादित्यप्रतीकोपासनप्रसङ्गेनादित्यान्तर्यामिणो ब्रह्मण उपासनाविशेषं विधित्सन्नाह "ब्रह्म ह वा ० य एवं वेद" इति । ब्रह्म ह परमात्मा वै एव इदं कालसूर्याग्न्यादिकं जग-दग्रे सृष्टेः पूर्वमासीत् ब्रह्मणोऽविभक्तमेव सर्वं वटबीज इव महान् वट आसीदित्यर्थः । अत एव स परमात्मैकः सजातीय-

ऽवाङ् च सर्वतोऽनन्तो न ह्यस्य प्राच्यादिदिशः कल्प्यन्तेऽथ तिर्यग्वाङ् चोर्ध्वं वानूह्य एष परमात्माऽपरिमितोऽजोऽतर्क्योऽचिन्त्य एष आकाशात्मैवैष कृत्स्न-

---

विजातीयवस्त्वन्तरशून्यः तर्हि किं वटबीजवत्सूक्ष्मो नेत्याहानन्तोऽपरिच्छिन्नो देशतः कालतो वस्तुतश्चासङ्कुचित इत्यर्थः। उक्तमानन्त्यमुपपादयति प्रागनन्त इत्यादिना, प्राच्यादिषु दशस्वपि दिक्षु परिच्छेदरहितत्वात् सर्वतोऽनन्त इत्यर्थः। तर्हि यासु दिक्ष्वस्यापरिच्छेदस्ता दिशोऽन्याः सन्तीति तत एव वस्तुपरिच्छेदोऽस्य स्यादिति कुतो निरङ्कुशमानन्त्यमित्यत आह, न ह्यस्येति। अस्याश्रयतया प्राच्यादिदिशो न हि कल्प्यन्ते न वस्तुतः सन्तीत्यर्थः। अथ तथा तिर्यङ् वाऽवाङ् चोर्ध्वं वा दिग्भेदोऽस्य न कल्प्यत इत्यर्थः। देशो वा देशसम्बन्धि वा वस्तु किमप्यस्य परिच्छेदकं नास्तीत्यभिप्रायः। यतोऽनूह्य एष परमात्मा न केनाप्यूह्यते धार्यत इत्यनूह्यो न क्वचिदाश्रित इत्यर्थः। तथा च श्रुत्यन्तरं 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छां० उ०) इति। 'अन्यो ह्यन्यस्मिन् प्रतिष्ठितः' इति च। अनूह्यत्वे हेत्वर्थं विशेषणं, अपरिमित इति। यद्वस्तूह्यते तत्परिमितं दृष्टं, अय परमात्मा न परिमितः, पूर्णं पुरुषेण सर्वमिति सर्वातिशायित्वश्रवणात्, अतोऽनूह्य इत्यर्थः। अज इत्यपरिमितत्वे हेतुः, यज्जन्मवत् तत्परिमितं तद्धि क्वचित्

क्षय एको जागर्तीत्येतस्मादाकाशादेष खल्विदं चेता-
मात्रं बोधयत्यनेनैव चेदं ध्यायतेऽस्मिंश्च प्रत्यस्तं या-

कदाचित् किञ्चिदित्युच्यते. अयं तु 'न जायते म्रियते वा' इति श्रुतेरजोऽतो न परिमित इत्यर्थः। परमात्मापि जन्मवान कारणत्वात् मृदादिवदित्यत आह, अतर्क्य इति। न तर्कगम्य इत्यर्थः। न सामान्यतो दृष्टानुमानादिरूपेण तर्केणायमीदृग् धर्मक इति व्यवस्थापयितुं शक्यते 'नावेदविन्मनुते तं बृहन्तं' 'नैषा तर्केण मतिरापनेया' इत्यादिश्रुतिभिस्तर्कागोचरत्वप्रति-पादनात्, श्रुत्यैकगम्येऽर्थे श्रुतिविरुद्धस्यानुमानस्यानुदयाच्चेति भावः। अतर्क्यत्वे हेतुरचिन्त्य इति। यत् तर्क्यते तन्मनसो गोचरे वर्तते स्वयञ्च मनोगोचरो नायं। तथा 'न तस्य कार्यं करणञ्च विद्यते न चास्य कश्चिज्जनिता न चाधिपः' (श्वे०। उ०) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेरित्यर्थः। तत्रासङ्गत्व हेतुमाह एष आकाशात्मेति आकाशवदसङ्गः आत्मा स्वरूपं यस्य स तथा। न हि मनसाऽसम्बद्धं मनोवेद्यं भवेदतिप्रसङ्गात्, 'असङ्गो ह्ययं पुरुषः' (बृहदा०) इति श्रुतेर्नास्य मनःसर्ग इत्यर्थः। तत एवंविधस्यानन्त्ये न कोऽपि विघ्न इति सिद्धं। इतोऽप्ययमनन्त एष्टव्य इत्यभिप्रेत्याह एवैष इति। एष एवेत्यन्वयः, कृत्स्नक्षये सर्व-जगत्प्रलये एक एवैष परमात्मा जागर्ति अप्रच्युतस्वभावो वर्तते, अन्यत् किमपि तदा नाभूदित्यर्थः। तथा च श्रुत्यन्तरं 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्' (ऐतरेयोप०) इति।

**त्यस्यैतद्भास्वरं रूपं यदमुष्मिन्नादित्ये तपत्यग्नौ चाधूमके यज्ज्योतिश्चित्रतरमुदरस्थोऽथ वा यः पचत्यन्नमित्येवं ह्याह ।**

---

एतदेव सर्वविकारकारणत्वेन सर्वाधिष्ठानतया स्पष्टीकरोति इत्येतस्माद्धिति । इतिशब्द उक्तविशेषणसमाप्त्यर्थत्वेन पूर्वेण वाऽन्वेति । एतस्मादित्येव प्रतीकमिदं । एष एव कृत्स्नचय एको जागर्तीति यतोऽत एतस्मादित्याद्ये प्रतीके योजना । एतस्मादाकाशात् प्रसिद्धाद्भूताकाशादारभ्य यदिदं जगच्चेतामात्रमित्यमात्रमिति यावत्, चैतन्याभासव्याप्तत्वेनोपलभ्यमानत्वाच्चेत्यमपि चेतामात्रमुच्यत इति द्रष्टव्यं । आकाशादिसर्वं जगदेष खलु परमात्मा बोधयति बोधव्याप्तं करोति पालयतीत्यर्थः । किञ्चानेनैव परमात्मनेदं ध्यायते ध्यानमात्रेणोत्पाद्यते 'सोऽकामयत बहु स्यां प्रजायेय' इति 'इदं सर्वमसृजत' इति च श्रुतेः । अस्मिंश्चास्मिन्नेव प्रत्यस्त प्रलयं याति एकात्मतां गच्छतीत्यर्थः । तस्मादेक एवैष कृत्स्नचये जागर्तीत्युपपन्नमस्य सर्वदैवानन्तत्वमिति भावः । एवमुपास्यस्य परमात्मनः स्वाभाविक स्वरूपमुपवर्ण्य तस्योपासनाधिष्ठानं निर्दिशन्नाहास्येति । अस्य परमात्मन एतद्यथोक्तं भास्वरं स्वप्रकाशं जगदवभासकं रूपं स्वरूपं यद्रूपममुष्मिन्नादित्ये प्रसिद्धे तपति आदित्ये स्थितं स जगत् तापयति प्रकाशयति च, एतदस्य रूपमिति । किञ्चाधूमकेऽग्नौ यज्ज्योतिस्तदप्यस्यैव रूपमिति सम्बन्धः ।

**यश्चैषोऽग्नौ यश्चायं हृदये यश्चासा आदित्ये स एष एका इत्येकस्य हैकत्वमेति य एवं वेद ॥ १७ ॥**

**तथा तत्प्रयोगकल्पः प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्गा इत्युच्यते योगः। अनेन**

---

कीदृशं ज्योतिः चित्रतरमतिविचित्रं तत्तद्दिन्धनभेदवशात् कृशस्थूलवक्रत्वाद्याकारेणावभासमानमित्यर्थः। अथ वा योऽन्योऽप्युदरस्थो जाठरसञ्ज्ञोऽग्निरन्नं भुक्तं पचति सोऽप्यस्यैव रूपमिति सम्बन्धः। इत्येतदेव प्रशंसन्नेवं स्वाहाऽचापेक्षितं विशेषमिति शेषः। यश्चैषोऽग्नौ ज्योतीरूपो यश्चायं हृदये साक्षिरूपो यश्चासावादित्ये तपनप्रकाशनस्वभावः एष परमात्मैव स एको न्याय इति एवम्प्रकारेणात्मन्यादित्यादौ च परमात्मैव ज्योतिरिति य एवं वेद उपास्ते स एकस्य परमात्मनः हि स्फुटमेकत्वमेति प्राप्नोति परमात्मसायुज्यं गच्छति तस्मात् सर्वत्र प्रकाशस्वरूपं परमात्मैवाहमित्युपासीत इति वाक्यार्थः॥ ॥ १७ ॥

पूर्वानुवाके ध्येयं रूपं ध्यानविधिश्च दर्शयित्वेदानीं ध्येये चित्तस्थिरीकरणलक्षणस्य ध्यानस्य सिद्धये चित्तवशीकारोपायं योगं साङ्गमुपदिशति “तथा तत्प्रयोगकल्पः ० इत्युच्यते योगः” इति। यथा प्रागुक्तोपासनासाधनचित्तैकाग्र्यसिद्धिस्तथा तत्प्रयोगकल्पस्तस्य चित्तैकाग्र्यसाधनस्य

**यदा पश्यन् पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विहाय परेऽव्यये सर्वमेकीकरोत्येवं ह्याह।**

---

प्रयोगकल्पोऽनुष्ठानविधिरयमुच्यत इति वाक्यशेषः। तमेवाह, प्राणायामः पूरककुम्भकरेचकभेदेन प्राणवायोरायमनं वशीकरणं प्राणायामः। इन्द्रियाणां विषयेभ्यः प्रत्याहरणं प्रतिनिवर्तनं प्रत्याहारः। पराक्स्रोतःपरावर्तनेनेन्द्रियाणां प्रत्यक्स्रोतः-प्रवर्तनं प्रत्याहार इत्यर्थः। ध्येये वस्तुन्यन्तःकरणस्य प्रयत्नेन तदाकारतया निवेशनं ध्यानं। तस्मिन्नेव तस्य तैलधारादिवदविच्छेदेन स्थिरीकरणं धारणं धारणा। मनो ध्येये वस्तुनि तदाकारतया सम्यक् सम्पन्नं न वेति परीक्षणं तर्कः, ध्यानधारणासामर्थ्यादुपस्थितक्षुद्रसिद्धीनां योगान्त-रायत्वोहनं वा तर्कः, सविकल्पकसमाधिर्वा तर्कः। चित्तस्य ज्ञेयवस्त्वाकारतामापन्नस्य निवातदेशस्थप्रदीपशिखावद-चलतयावस्थानं समाधिः। इत्येवं षड्विधैरङ्गैरुपेतो योगः षडङ्ग उच्यत इत्यर्थः। उक्तस्यास्य योगस्य सर्वार्थध्यानोप-कारकतां विवक्षन्नाह "अनेन यदा ० कदाचन" इति। अनेन योगेन सम्यगभ्यस्तेन पश्यन् स्वध्येयं वस्तु समालोचयन् सन् यदा यस्मिन् समये रुक्मवर्णं पुरुषं पश्यति साक्षादनु-भवति तदा तस्मिन्नेव समये विद्वान् परिपूर्णं तत्त्वं जानानः पुण्यपापे अनारब्धफले विहाय त्यक्त्वा प्रारब्धस्यापि कर्मण

यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः ।
तद्वद्ब्रह्मविदो दोषा नाश्रयन्ति कदाचन ॥ १८ ॥

अथान्यत्राप्युक्तं यदा वै बहिर्विद्वान् मनो नियम्येन्द्रियार्थांश्च प्राणे निवेशयित्वा निःसङ्कल्पस्ततस्ति-

---

उभयविधस्य भोगेन विनाशे सति सर्वं प्राणेन्द्रियदेहादिरूपमुपाधिं परे परमात्मन्यव्यये कूटस्थे प्रत्यगात्मनि ब्रह्मण्येकीकरोति, तप्तायःपीतोदकबिन्दुवत् प्रकाशमाने आत्मन्युपसंहरति इत्यर्थः । रुक्मवर्णमित्यादिपुरुषविशेषणजातस्यायमर्थः, रुक्मवर्णमिति स्वतःसिद्धप्रकाशात्मताद्योतनादविषयत्वं पुरुषस्य विवक्ष्यते, कर्तारमिति पुरुषविशेषणं भूतपूर्वगत्योच्यते, ईशं योनिमिति च ब्रह्मविशेषणे निमित्तोपादानपरे ते अपि भूतपूर्वगत्यानूद्येते । पुरुषब्रह्मशब्दौ त्वन्तत्पदलक्ष्यविषयौ, तथा च कर्तारं पुरुषमीशं योनिं ब्रह्म रुक्मवर्णं यदा पश्यति इति योजनीयो ग्रन्थ इति । एवं ह्याहेत्यादिर्विद्यामाहात्म्यख्यापनपरो ग्रन्थः स्पष्टार्थः ॥ १८ ॥

इदानीं पूर्वोक्तयोगे परिनिष्ठितस्य श्रेष्ठं पदं स्वे हृदि धारणायाः प्रवर्तते वक्तुमनन्तरेण खण्डेन वेदोऽतिरहस्यवादी "अथान्यत्राप्युक्तं ० निराश्रयं" इति । यदा वै यस्मिन्नेव काले विद्वान् योगी प्राणः प्राणोपाधिं प्रविष्टो मनो नियम्यैकत्र स्थिरं कृत्वा इन्द्रियार्थांश्च शब्दादीन् विषयान् बहिर्निवेशयित्वा दूरतस्त्यक्त्वा ततस्तदनन्तरं निःसङ्कल्पो निर्विकारमनास्तिष्ठेदिति

ष्ठेदप्राणादिह यस्मात् सम्भूतः प्राणसञ्ज्ञको जीवस्तस्मात् प्राणो वै तुर्याख्ये धारयेत् प्राणमित्येवं ह्याह ।

अचित्तं चित्तमध्यस्थमचिन्त्यं गुह्यमुत्तमं ।
तत्र चित्तं निधायेत तच्च लिङ्गं निराश्रयं ॥ १९ ॥

---

पदान्वयानुरूपा व्याख्या । कथं विद्वान् प्राणः कथं वा तिष्ठेदित्याकाङ्क्षायामाह, अप्राणादिति । अप्राणात् प्राणादिविशेषरहिताच्चिदात्मन एवेह देहे यस्मात् प्राणसञ्ज्ञको जीवः सम्भूतः प्राणधारणोपाधिना प्राणसञ्ज्ञां प्राप्य जीवो जात इति यावत् तस्मात् प्राणो वै स्वभावतोऽप्राणोऽपि प्राण इति प्रसिद्धः, स तुर्याख्येऽवस्थात्रयातीतेऽप्राणे प्राणमात्मानं धारयेत् प्राणात्मभावनां हित्वाऽप्राणचिदात्मभावनां कुर्यादित्यर्थः । एवं ह्याहाच कश्चिन्मन्त्रः । अचित्तं चित्तरहितं चित्तमध्यस्थमन्तर्मनस्यभिव्यक्तं चित्तस्थितमपि तेनाचिन्त्यं चिन्तनानर्हं, अत एवोत्तमं गुह्यमतिगुह्यं, सर्वेन्द्रियाविषय इत्यर्थः । तत्राचिन्त्ये गुह्ये तत्त्वे चित्तं निधायेत तदाकारीकरणेन तन्मयं चित्तं कुर्यात्, तच्च प्राणाख्यं लिङ्गं लिङ्गोपाधिकं जीवरूपं निराश्रयमभिमन्तुराश्रयस्याभावात् तदा न पृथगवभासत इत्यर्थः । यदा आश्रयशब्दो विषयपरः, तथा च तच्च चित्ताख्यं लिङ्गं निराश्रयं निर्विषयं सम्पद्यते तदेति शेषः ॥ १९ ॥

**अथान्यत्राप्युक्तमतः परास्य धारणा तालुरसनाग्रनिपीडनाद्वाङ्मनःप्राणनिरोधनाद् ब्रह्म तर्केण पश्यति यदात्मनात्मानमणोरणीयांसं द्योतमानं मनःक्षयात् पश्यति तदात्मनात्मानं दृष्ट्वा निरात्मा भवति निरात्मकत्वादसङ्ख्योऽयोनिश्चिन्त्यो मोक्षलक्षणमित्येतत्परं रहस्यमित्येवं ह्याह।**

---

एवं ज्ञानमार्गेणात्मनोऽवस्थात्रयातीतस्वरूपे धारणाप्रकारमभिधाय योगमार्गेणापि धारणाविशेषं कैवल्यं सम्मतमुपदिशति "अथान्यत्राप्युक्तं ० सुखमव्ययमश्नुता इति" इति। अतोऽनन्तरमस्य तुर्यात्मनि स्थितस्यात्मनः परा उत्कृष्टा धारणा परा अन्येति वा कथ्यत इति वाक्यशेषः, यदाऽयं योगाभ्यासवशीकृतचित्तः सन्नुन्मनीभावं जिगमिषति तदाऽयमुपायः कार्यः। कथ. तालुकण्ठदेशे जिह्वोद्गमनस्थानं, तस्मिंस्तालुनि रसनाग्रस्य निपीडनमन्तःप्रवेशनं, तस्मात् तालुरसनाग्रनिपीडनात् लम्बिकायोगकरणादिति यावत्, तत्र च वाङ्मनप्राणानां निरोधनात् सङ्कल्पोच्चारणस्पन्दनानां परिवर्जनात् ब्रह्म पारमेश्वरं तत्त्वं तर्केण धारणानन्तरभाविना निश्चितरूपेण ज्ञानेन पश्यति। यदैवंप्रकारेण मनःक्षयात् मनसो मनस्त्वनाशात् अणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्ममिन्द्रियागोचरं द्योतमानं स्वयमेव प्रकाशमानमात्मानं प्रत्यक्षमात्मना पर-

**चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभं ।**
**प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुता इति ॥ २० ॥**

**अथान्यत्राप्युक्तमूर्द्धगा नाडी सुषुम्नाख्या प्राणसञ्चारिणी ताल्वन्तर्विच्छिन्ना तया प्राणोङ्कारमनो-**

---

मात्मना, 'इत्थंभावे तृतीया', परमात्मरूपेण पश्यति साक्षादनुभवति । तदाऽऽत्मनात्मानं दृष्ट्वा निरात्मा भवति' निर्मनस्को भवति जीवभावान्निवर्त्तते. एषावस्था योगिभिरुन्मनीत्युच्यते । निरात्मकत्वादक्षरूपेणोन्मनीभावात् परिच्छेदकविरहादसङ्ख्योऽपरिच्छिन्नोऽयोनिराश्रयरहित आत्मा चिन्त्यः, चिन्तनं नामात्र तदात्मनावस्थानमात्रं, एवंविध आत्मा तदा स्फुरति इत्युक्तं भवति । न पुनरत्र विधिरसम्भवात् तस्येति भावः । इत्येतन्मोक्षलक्षणं मोक्षस्वरूपं परं रहस्यमतिशयेन गोप्यमित्यस्मिन्नर्थे एवं ह्याह मन्त्रमुदाहरति, चित्तस्य हीति । प्रसादो निर्वासनतापत्तिः, आत्मनि स्थितिस्तस्मिन्नेकीभावः, स्पष्टमन्यत् ॥ २० ॥

इदानीमुपासकस्योपासनापरमफलप्राप्त्यर्थं देहादुत्क्रमणमार्गमुपदिशति "अथान्यत्राप्युक्तं ० पश्चाद्युञ्जीत मूर्द्धनि" इति । या सुषुम्नाख्या नाडी हृदयान्मूर्द्धि ब्रह्मरन्ध्रपर्यन्तमूर्द्धगा प्राणसञ्चारिणी प्राणस्य ब्रह्मलोकपर्यन्तं सूर्यरश्मिद्वारा सञ्चारयित्री प्रसिद्धा । तथा च श्रुत्यन्तरं 'शतञ्चैका च हृदयस्य

**युक्तयोर्द्ध्वमुत्क्रमेत् ताल्वध्यग्रं परिवर्त्य चेन्द्रियाण्यसंयोज्य महिमा महिमानं निरीक्षेत ततो निरात्मकत्वमेति निरात्मकत्वान्न सुखदुःखभाग्भवति केवलत्वं लभता इत्येवं ह्याह ।**

---

नाड्यस्तासां मूर्द्धानमभिनिःसृतैका । तयोर्द्ध्वमायन्नमृतत्वमेति' (कठोप०) इति । सा पुनरूर्द्ध्वं गच्छन्ती ताल्वन्तरमध्ये विच्छिन्ना कुण्ठिता भवति । तथा च तत्र यत्नतस्तथा प्राणोङ्कारमनोयुक्तया अभ्यासवशीकृतेन प्राणेन ध्येयब्रह्माकाराकारितेन मनसा ॐकारध्वनिना च युक्तया ऋज्वीकृतयोर्द्ध्वं तालूपरि स्तनाकारेण लम्बमानमांसान्तःप्रवेशनेनोत्क्रमेदुपरि गच्छेदित्यर्थः । तथा च श्रुत्यन्तरं 'अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्रयोनिर्यत्रासौ केशान्तो विवर्तते व्यपोह्य शीर्षकपाले' (तैत्तिरीयोप०) इति । तत्रोर्द्ध्वं नाडीनयनप्रकारमाह ताल्वध्यग्रं परिवर्त्येति । तल्वधि उपरि रसनाया अग्रं परिवर्त्य सञ्चार्य, यद्वा तालुनोऽग्रादुपरि ताल्वन्तः रसनाग्रं निवेश्योपरि स्तनाकारमभिभूयेति यावत् । इन्द्रियाणि संयोज्य प्राणमनोभ्यामेकीकृत्योत्क्रमेदिति पूर्वेणान्वयः । एवमुत्क्रमणे यो महिमा परिच्छेदनिवृत्त्या पूर्णतारूपस्तं महिमानं निरीक्षेतानुभवेत्, ततस्तस्मान्निरीक्षणात् निरात्मकत्वं निरिन्द्रियमनस्कत्वं

**परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं ततः ।
तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्द्धनि ॥ २१ ॥**

---

निर्लिङ्गत्वमेति प्राप्नोति, निरात्मकत्वात् न सुखदुःखभाग्भवति वति केवलत्वं कैवल्यं मोक्षं लभत इत्येवमर्थं ह्याह मन्त्र इत्यर्थः । इन्द्रियाण्यसंयोज्येति पाठे इन्द्रियायतनानां शरीरावयवानां मनःप्राणाभ्यामसम्बन्धनमुपदिश्यत इति व्याख्या । एतदुक्तं भवति, प्रागुक्तप्रकारेण योगधारणया युक्तो ब्रह्मोपासीनो यदा योगसामर्थ्यात् तत्त्वतः सञ्चारितसुषुम्नानाडीकस्तत्रैव कथञ्चित् परमात्मतत्त्वमवगच्छति सदोन्मनीभावेन परममुक्तेरयत्नलभ्यत्वं जानंस्तत्रैव यावज्जीवं ब्रह्ममयोऽवतिष्ठेत । ततः प्रारब्धक्षये देहविगमे परमं महिमानं परममुक्तिलक्षणं गच्छति । यदा पुनः प्रागुक्तं स्थानं योगमहिम्ना प्राप्नोति ब्राह्मलौकिकैश्वर्यविहाराभिलाषस्तदोर्द्ध्वमुक्तप्रकारेणोत्क्रम्य महिमानं ब्राह्मलौकिकं निरीक्षेत, ततः क्रमेण केवलत्वं कालेन लभत इति । परः पूर्वमिति पूर्वमभ्यासदशायां निगृहीतानिलं वशीकृतप्राण परः परस्तात् तालुदेशे प्रतिष्ठाप्य स्थिरीकृत्य ततः पश्चात्पारं परिच्छिन्नं जीवभावं तीर्त्वा उल्लङ्घ्य पश्चादपारेणापरिच्छिन्नेन ब्रह्मणा तद्रूपेणात्मानं मूर्द्धनि ब्रह्मरन्ध्रे युञ्जीत योजयेत् मूर्द्धद्वारा ब्रह्मभावं नयेदित्यर्थः ॥
॥ २१ ॥

**अथान्यत्राप्युक्तं द्वे वाव ब्रह्मणी अभिध्येये शब्दश्चा-शब्दश्चाथ शब्देनैवाशब्दमाविष्क्रियतेऽथ *तत्र ओमितिशब्दोऽनेनोर्द्ध्वमुत्क्रान्तोऽशब्दे निधनमेत्यथा-हैषा गतिरेतदमृतमेतत् सायुज्यत्वं निर्वृतत्वं तथा**

---

इदानीं प्रकारान्तरेण ब्रह्मप्राप्त्युपायमुपदेष्टुमुपक्रमते "अथान्यत्राप्युक्तं द्वे ० अधिगच्छति" इति। द्वे वाव एव ब्रह्मणी अभिध्येये, के ते शब्दश्चैकं ब्रह्म अशब्दश्च द्वितीयं, किन्तु द्वे अपि स्वतन्त्रे न किन्तूपायोपेयरूपे इत्याह, अथान-योर्ब्रह्मणोर्यः शब्दस्तेन शब्देन ब्रह्मणाऽशब्दं ब्रह्माविष्क्रियते प्रकटीक्रियतेऽनभिव्यक्तितिरोधानमात्रेणेत्यर्थः। किं शब्दब्रह्म कथं वा तेनाशब्दं ब्रह्माविष्क्रियत इति तदाह, अथैवं सति तत्र तयोर्द्वयोर्मध्ये ओमितिशब्दः ओङ्कारः शब्दाख्यं ब्रह्म, अनेन सर्वार्थवाचकसर्वशब्दव्यापकतया पूर्णत्वेनोद्भूत्याभ्यस्तेन साधनेनानेन शब्दब्रह्मणोर्द्ध्वं प्रपञ्चादुपरि उत्क्रान्त उद्गतो वाच्यवाचकरूपं सर्वं वेद्यजातमतिक्रान्तः सन्नशब्दे परे ब्रह्मणि निधनं नद्य इव समुद्रे लयमेति प्राप्नोति। यैवमशब्दे वाचामगोचरे ब्रह्मण्येकतापत्तिरथ तदा एषा हि गतिः परमं फलं, एतदेवामृतममृतत्वं मोक्षः, एतत् सायोज्यं सायुज्यं सयुग्भावस्तादात्म्यमिति यावत्, निर्वृतत्वं परमानन्दाविर्भावः कृतकृत्यत्वमित्यर्थः। इतिशब्दः शब्दाशब्दब्रह्मोपदेशसमाप्त्यर्थः।

---

* यत्रा इति पाठान्तरं।

चेत्यथ यथोर्णनाभिस्तन्तुनोर्द्ध्वमुत्क्रान्तोऽवकाशं लभतीत्येवं वाव खल्वसा अभिध्याता ओमित्यनेनोर्द्ध्वमुत्क्रान्तः स्वातन्त्र्यं लभतेऽन्यथा परे शब्दवादिनः श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाशशब्दमाकर्णयन्ति सप्त-

---

उक्तेऽर्थे दृष्टान्तमाहयेति। अथास्मिन्नर्थे दृष्टान्तो यथोर्णनाभिर्लूताकीटस्तन्तुना स्वमुखाल्लालानिर्मितेनाविच्छिन्नेन सूत्रेणोर्द्ध्वमुपरिदेशं प्रत्युत्क्रान्तोऽवकाशं निरङ्कुशविहारस्थानं लभति लभते इति प्रसिद्धं जन्त्वन्तरसाधारणदेशशावल्यं परित्यज्यासाधारणं निर्भयमवकाशं प्राप्नोतीत्यर्थः। एवं वाव एवमेव खलु यथायं दृष्टान्तस्तथा असावभिध्याता ओमित्यनेन शब्दब्रह्मणा साधनेनोर्द्ध्वमुत्क्रान्तोऽहंममतास्पदशावल्यादिमुक्तः स्वातन्त्र्यं कैवल्याख्यं लभत इत्यर्थः। एवं प्रणवाख्यशब्दब्रह्माभ्यासोऽशब्दपरब्रह्माविर्भावसाधनमिति स्वमतमुक्त्वा मतान्तरमाहान्यथेति, परे शब्दवादिनः शब्दब्रह्मवादिनः शब्दमाकर्णयन्तीत्यन्वयः। कथमिति तदाह श्रवणेति। कर्णयतोरङ्गुष्ठं योजयित्वा कर्णयोरङ्गुष्ठाभ्यां पिधानेनान्तर्हृदये य आकाशोऽवकाशस्तत्रत्यं शब्दमाकर्णयन्ति तं शब्दं शब्दब्रह्मेति मन्यन्त इत्यर्थः। तस्य श्रूयमाणस्यान्तर्हृदयाकाशस्थघोषस्येयं वक्ष्यमाणा सप्तविधोपमोपमानं भवति। तामेवाह यथेति, नद्यो नदीनां घोषः, किङ्किणी घण्टाघोषः,

विधेयं तस्योपमा यथा नद्यः किङ्किणी कांस्यचक्रक-भेकविःक्वन्धिका वृष्टिर्निवाते वदतीति तं पृथग्-लक्षणमतीत्य परेऽशब्देऽव्यक्ते ब्रह्मण्यस्तं गतास्तत्र ते ऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा सम्पन्ना मधुत्वं नानारसा इत्येवं ह्याह ।

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २२ ॥

---

कांस्यं तत्पात्रघोषः, चक्रकं रथचक्रध्वनिः, भेकविःक्वन्धिका मण्डूकरवः, वृष्टिर्वर्षणशब्दः, निवाते गुहायां कूपे वा वदति वदनमुपरिस्थितेन श्रूयमाणं सोऽप्येकः प्रकारः । एतैर्ध्वनिभिः सदृशो योऽन्तराकाशशब्दस्तं शब्दब्रह्मापरे वदन्तीत्यर्थः । इतिशब्द उपमेत्यनेन पूर्वेण सम्बध्यते । तमेवमन्तर्हृदये श्रूय-माणं पृथग्लक्षणमनेकोपमानैरनेकधा विभाव्यमानं शब्द-मतीत्य परेऽशब्देऽव्यक्ते वाचामगोचरे ब्रह्मणि शुद्धेऽस्तं गता अदर्शनं प्राप्तास्ते शब्दब्रह्मवादिन इत्यर्थः । तत्र परे ब्रह्मणि तेऽपृथग्धर्मिणो ब्रह्मैकस्वभावा अत एवापृथग्विवेक्याः पृथग्विवेकुमशक्याः पूर्ववद्भेदोल्लेखायोग्या इत्यर्थः । तत्रायं दृष्टान्तो यथा नानारसाः पृथक्स्वभावकुसुमरसा यथा मधुत्वं मध्वात्मत्वं सम्पन्नाः सन्तो न पृथग्विवेक्यास्तद्वदित्यर्थः । एवं ह्यत्रोदाहरणमाह श्रुतिः द्वे ब्रह्मणी इति, श्लोकः स्पष्टार्थः ॥ ॥ २२ ॥

**अथान्यत्राप्युक्तं यः शब्दस्तदोमित्येतदक्षरं यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसञ्ज्ञितं सर्वापरत्वाय तदेता उपासीतेत्येवं ह्याह ।**

**योऽसौ परापरो देवा ओङ्कारो नामनामतः ।**
**निःशब्दः शून्यभूतस्तु मूर्ध्नि स्थाने ततोऽभ्यसेत् ॥ २३ ॥**

---

उक्तमेव शब्दाशब्दब्रह्मरूपं विभज्याशब्दब्रह्मस्वरूपं विशदयति "अथान्यत्राप्युक्तं यः ० ततोऽभ्यसेत्" इति । यदोमित्येतदक्षरं तच्छब्दः शब्दाख्यं ब्रह्मेति योजना । यदस्य प्रणवाख्याक्षरस्याग्रं नादावसानस्थानं तच्छान्तं निर्विशेषमशब्दमशब्दाख्यं परं ब्रह्म, अभयमित्यादीनि तस्य स्वरूपलक्षणार्थानि विशेषणानि स्पष्टार्थानि । सर्वापरत्वाय सर्वस्मादपरत्वाय मोक्षाय तदेता एते उक्तलक्षणे ब्रह्मणी उपासीतेत्येवमस्मिन्नर्थे ह्याह । योऽसौ प्रसिद्धः परस्यापरस्य परापरब्रह्मद्वयस्य हेतुत्वाद्देवः परं ब्रह्म । कः, ओङ्कारो नामनामतः, योऽयं प्रसिद्धः स शब्दब्रह्मेत्यर्थः । यस्तु निःशब्दः परं ब्रह्माशब्दाख्यं शून्यभूतो निराकारत्वान्निर्विशेषः, तत एवंविधमात्मानं ब्रह्म मूर्ध्नि स्थाने सर्वोत्कृष्टे हृदयस्थाने, अथवा भ्रुवोर्घ्राणस्य च यः सन्धिः सोऽविमुक्ताख्यः श्रुत्यन्तरे प्रसिद्धस्तस्मिन्मूर्ध्नि स्थानेऽभ्यसेत् ध्यायीतेत्यर्थः ॥ २३ ॥

**अथान्यत्राप्युक्तं धनुः शरीरमोमित्येतच्छरः शिखास्य मनस्तमोलक्षणं भित्त्वा तमोऽतमाविष्टमागच्छत्यथाविष्टं भित्त्वाऽलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्तं ब्रह्म तमसः पर्यमपश्यद्यदमुष्मिन्नादित्ये**

पूर्वोक्तप्रकारेण यथानिर्दिष्टं ब्रह्मोपासितवतो गतिं साधनविशेषोपदेशपूर्वकमाह, यद्वा 'द्वे वाव ब्रह्मणी अभिध्येये' इत्यस्मिन्ननुवाके स्वमतेन शब्दब्रह्म प्रणवाख्यमुक्तं तन्निष्ठायां प्रकारविशेषमुपदिशन्नुपासनाफलप्रकारमाह "अथान्यत्राप्युक्तं धनुः ० क एव सः" इति । धनुः कोदण्डः प्रसिद्धं शरीरं, ओमित्येतदक्षरं शरः, अस्य शरस्य शिखा अग्रं शल्यस्थानीयं मनः, तमो भ्रान्तिज्ञानं लक्षणं सद्भावज्ञापकं यस्य तत् तमोलक्षणं, तमो मूलाज्ञानं भित्त्वा शरप्रयोगेण लक्ष्यतमोभेदनं कृत्वाऽतमाविष्टं सद्भिः क्रान्तः, अतमश्चाविष्टं तमश्चावेशनरहितं सद्भातादिविक्तमात्मानमागच्छति, मनोरूपं शराग्रं तस्मिन्निवेशयतीत्यर्थः । एतदुक्तं भवति 'सम आसन आसीनः सममूर्द्ध्वं धृतं शरीरं धनुरिव किञ्चिदवक्षसि चिबुकारोपणेनायम्य तस्मिन् प्रणवं घोषवन्तं शरमिवाविष्कृत्य तस्य नादलयस्थाने मनः शरशल्यमिव बद्धा तेन प्रणवशराग्रेण मनसा आवरणं सविक्षेपमज्ञानं विदार्य तदाश्रयविषयतयोपलक्षितमात्मानं प्रवेशयेत् तन्मनः' इति । अथानन्तरमाविष्टं पूर्वमज्ञानाविष्टमात्मानमह-

ऽथ सोमेऽग्नौ विद्युति विभात्यथ खल्वेनं दृष्ट्वाऽमृतत्वं गच्छतीत्येवं ह्याह ।

ध्यानमन्तः परे तत्त्वे लक्ष्येषु च निधीयते ।

अतोऽविशेषविज्ञानं विशेषमुपगच्छति ॥

---

ङ्कारास्पदं भित्त्वा द्रष्टृरूपं दृश्यसापेक्षं विदार्य ब्रह्मापश्यदिति सम्बन्धः । तस्य ब्रह्मण आत्माभेदत्वख्यापनाय पुंलिङ्गैर्विशेषणै-स्तद्विशिनष्टि, अलातेत्यादिना । अखण्डाकारस्फुरणेऽलातचक्र-दृष्टान्तः । आदित्यवर्णमिति सर्वदृश्याभिभावकप्रकाशात्मत्वमा-दित्यरूपसादृश्यमुच्यते । ऊर्जस्वन्तमूर्जो रसस्तद्वन्तं, आनन्दरस-मिति यावत्, तथा च श्रुतिः 'रसो वै सः । रसं ह्येवायं लब्ध्वा-नन्दी भवति' (तैत्तिरीयो०) इति । तमसः पर्यमिति पर-श्चेतं पर्यं पारं तमसः परस्तादतमस्करमित्यर्थः । एवं भूत-मात्मानं ब्रह्मापश्यत् पश्यतीत्यर्थः । 'यदादित्यगतं तेजो जग-द्भासयतेऽखिलं । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं' (गी०) इति स्मृतेर्मूलभूतेन वाक्येन प्रकाशमात्रमस्य स्वाभा-विकं स्वरूपं सर्वत्रोपलक्षणीयमित्यभिप्रेत्याह, यदमुष्मिन्निति । अथैवं ब्रह्मात्मदर्शनसमये खल्वेनमात्मानं दृष्ट्वा ब्रह्माभेदेन साक्षा-त्कृत्याऽमृतत्वं गच्छति मुक्तो भवतीत्येवं ह्याह इति पूर्ववत् । अन्तःप्रतीचि सर्वान्तरे परे तत्त्वे परे ब्रह्मणि ध्यानं धीयते लक्ष्येषु च प्रथमं शरीरप्रणवमनस्तत्त्वयस्थानेषु च ध्यानं धीयते

**मानसे च विलीने तु यत् सुखं चात्मसाक्षिकं।**
**तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोक एव सः॥ २४॥**

**अथान्यत्राप्युक्तं निद्रेवान्तर्हितेन्द्रियः शुद्धितमया धिया स्वप्न इव यः पश्यतीन्द्रियबिलेऽविवशः प्रणवाख्यं**

---

क्रियते कुर्यादित्यर्थः। अतो ध्यानाद्विशेषविज्ञानमस्फुटोऽनुभवो विशेषं स्फुटत्वमुपगच्छति। स्फुटतरसाक्षात्कारोदये सति यदात्मनावस्थानं सा मुक्तिरित्येतदाह, मानस इति। मानसे मनःपरिणामरूपेऽहङ्कारग्रन्थौ विलीने प्रलयङ्गते, चकारात् तद्वासनायां च विलीनायां, तु शब्दः सुषुप्तेर्विशेषणार्थः। यत् सुखं, चकाराद्धेतुमत्त्वशङ्का व्यावर्त्यते, नित्यं यत् सुखमात्मसाक्षिकं स्वयमेव स्फुरत्, न वेद्यमिति यावत्, तदेव ब्रह्म चकारादात्मा च, कीदृशममृतमविनश्वरं, शुक्रं दीप्तिमत् ज्ञानस्वभावं, यदेवंविधं ब्रह्मात्मतत्त्वं सा गतिः पुरुषार्थः, स एव लोकः फलं सर्वसाधनानामित्यर्थः॥ २४॥

इदानीमुक्तां विद्यामनूद्य तदन्तं प्रशंसन् विद्यामेव महीकरोति "अथान्यत्राप्युक्तं ॰ इत्यभिधीयते" इति। निद्रेव निद्रित इव सुषुप्त इव चान्तर्हितेन्द्रियः प्रविलीनेन्द्रियवृत्तिर्न निद्रावानित्यर्थः। तथा स्वप्न इव स्वप्नदृगिव इन्द्रियबिले -इन्द्रियाणां निवासस्थाने देहे अविवशः स्थूलदेहाभिमानशून्य इति यावत् न लयं स्वप्नदृगेवेत्यर्थः। अनेनैव देहाभिमान-

**प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकञ्च सोऽपि प्रणवाख्यः प्रणेता भारूपो विगतनिद्रो विजरो विमृत्युर्विशोको भवतीत्येवं ह्याह।**

---

राहित्येन जाग्रदप्यय नेत्युक्तप्रायं द्रष्टव्यं, तथा चैवमवस्थात्रयातीतो लयविक्षेपरहितया शुद्धितमयाऽतिशयेन शुद्धिमत्या धिया प्रसन्नबुद्ध्या यः प्रणवाख्यं प्रणवैकात्मतामापन्नं प्रणेतारं पश्यति सोऽपि तदात्मा भवतीति योजना, 'तं यथोपासते तदेव भवति' इति श्रुतेः। प्रणेताऽन्तर्यामीश्वरः तं यथा प्रणेतारमन्तर्यामित्वेनोपलक्षितमित्यर्थः। भारूपं ज्ञानप्रकाशस्वरूपमित्यनेन स्वरूपलक्षणमुक्तं, विगतनिद्रमित्यविद्यातत्कार्यरूपावरणविक्षेपाज्ञानरहितनया कूटस्थत्वमुच्यते। विजरं विमृत्युमिति स्थूलसङ्घातधर्मवत्त्वनिरासेन ततो विविक्तत्वमुच्यते। विशोकमिति अन्तःकरणधर्मराहित्यं, चकारात् प्राणधर्मक्षुत्पिपासाराहित्यं गृह्यते, एतेन सूक्ष्मसङ्घातादपि विविक्ततोक्ता। तथा च कार्यकारणप्रपञ्चातीतं यथोक्तविशेषण लयविक्षेपरहिततयाऽवस्थात्रयातीतया बुद्ध्या योऽनुभवति सोऽपि प्रणवाख्य इत्याद्युक्तात्मको भवतीत्येवं ह्याह। किं, एवं यथोक्तप्रकारेण प्राणप्रणेतारमात्मानं, अथ तथा ओङ्कारमोङ्कारात्मनैकीकृतं तत्त्वं प्रति यस्मादनेकधाऽनेकप्रकारं स्थूलसूक्ष्मकारणात्मकं सर्वं जगद्युनक्ति योजयति प्रविलापयति कश्चित्, युञ्जते वाऽपि स्वयमेव वा विलीयमानं युञ्जते योजयन्ति वा

एवं प्राणमथोङ्कारं यस्मात् सर्वमनेकधा ।
युनक्ति युञ्जते वापि तस्माद्योग इति स्मृतः ॥
एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च ।
सर्वभावपरित्यागो योग इत्यभिधीयते ॥ २५ ॥
अथान्यत्राप्युक्तं यथा वाप्सु चारिणः शाकुनिकः
सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ जुहोत्येवं वाव खल्विमान्

केचित्, तस्मादियं निष्ठा योग इति स्मृतः कथितो योगज्ञैरित्यर्थः । सिद्धनिष्ठां फलरूपं योगमुपलक्ष्य तत्साधकनिष्ठां साधनरूपं योगं लक्षयत्येकत्वमिति, प्राणादीनामेकत्वं, एकविषयप्रवणतया प्रत्यक्प्रवाहकरणं । सर्वभावपरित्यागः सर्वेषु क्रियाकारकफलेषु भावपरित्यागः सत्त्वबुद्धित्यागः, अथवा सर्वविषयको यो भावो भावनासंस्कारस्तस्य परित्यागः, अविषयात्मतत्त्वज्ञानाभ्यासेन वाह्यविषयवासनाभिभव इत्यर्थः ॥ ॥ २५ ॥

पुनः प्रकारान्तरेण प्रणवनिष्ठायां भावनाविशेषं योगान्तरमाह "अथान्यत्राप्युक्तं ० यथाक्रमेण" इति । यथा वा लोके कश्चिच्छाकुनिकः शकुनोपजीवी किरातकैवर्तादिरप्सु चारिणो मत्स्यादीन् सूत्रयन्त्रेण जालसूत्रेणोद्धृत्योदरे उदरस्थेऽग्नौ जुहोति जाठराग्निसात्करोति एवं वाव एवमेव खलु इमान् प्राणान् जलचरस्थानीयान् देहान्तर्विच-

प्राणानोमित्यनेनोद्धृत्यानामयेऽग्नौ जुहोत्यतस्तप्तोर्वीव सोऽथ यथा तप्तोर्वि सर्पिस्तृणकाष्ठसंस्पर्शेनोज्ज्वलतीत्येवं वाव खल्वसावप्राणाख्यः प्राणसंस्पर्शेनोज्ज्वलत्यथ यदुज्ज्वलत्येतद्ब्रह्मणो रूपञ्चैतद्विष्णोः परमं पदञ्चैत-

---

एतः सर्वानेव मुख्यामुख्यरूपानोमित्यनेनाक्षरेण जालसूत्रस्थानीयेन सर्वार्थसङ्ग्रहसमर्थेनोद्धृत्य पृथक्कृत्यानामये निर्दोषे ब्रह्मात्माग्नौ जुहोति तदात्मसात्करोति इत्यर्थः। उद्धृत्य होमे दृष्टान्तमुक्त्वा क्रतस्याऽग्निग्रस्ततयाग्निमयत्वे दृष्टान्तमाह, अतस्तप्तोर्वीव स इति। अतो होमानन्तरं स आत्मरूपोऽनामयोऽग्निस्तप्तोर्वीव उर्वीशब्देनोर्वीजं भाण्डमुच्यते यथा घर्मं महावीराख्यं भाण्डं तप्तं तादृशः स इत्यर्थः। दृष्टान्तं विवृणोति, अथ यथेति। तप्ता उर्वी आधारो यस्य तत् तप्तोर्वि तच्च तत् सर्पिश्चेति विग्रहः। तद्यथा तृणादिसंस्पर्शेनोज्ज्वलत्यूर्द्ध्वज्वालं जायते एवमित्यादिदार्ष्टान्तिकोक्तिः, एव वावैवमेव खल्वसावप्राणाख्यः प्राणादिसङ्घातादिविक्ततया प्राणाख्यामलभमान आत्माग्निः प्राणसंस्पर्शेनोज्ज्वलति प्रकटीभवतीत्यर्थः। एतदुक्तं भवति यथा सन्तप्ते भाण्डे विद्यमानोऽप्यग्निर्न स्वरूपेण संदृश्यते घृतेनोद्दीपितः संस्तदक्ततृणादिसम्बन्धे यथावद्दृश्यते एवमसावात्मा देहसंस्थो न यथावदवभासते प्राणादिप्रपञ्चप्रविलापने सति विलीयमानप्रपञ्चानुगतचिदाभास-

द्रुद्रस्य रुद्रत्वमेतत्तदपरिमितधा चात्मानं विभज्य पूरयतीमान् लोकानित्येवं ह्याह।

वह्नेश्च यद्वत् खलु विष्फुलिङ्गाः
सूर्यान्मयूखाश्च तथैव तस्य।
प्राणादयो वै पुनरेव तस्मा-
दभ्युच्चरन्तीह यथाक्रमेण ॥ २६ ॥

---

द्वारा यथावदवभासत इति। अथवा पूर्वोक्तस्यात्मनो यदग्निरूपकत्वमुक्तं तद्दृष्टान्तेन प्रपञ्चयति, तप्तोर्वीव स इत्यादिना। तप्तोर्विग्रब्देन तप्तं घृतं लच्यते, तद्यथा स्वोर्व्यां सह तप्यमानं स्वसंसर्गि सर्वं तृणादिकं सन्तपदभिज्वलति एवमयमप्राणाख्य आत्मा चिदाभासव्याप्तं देहद्वयं सन्तपंस्तत्संसृष्टं सर्वमेव जगदभिज्वलयति प्रकाशयतीत्यग्नित्वेन रूपकमुक्तमिति। अस्यैव सर्वोत्पत्तिस्थितिलयकारणत्वेन सर्वात्मत्वमाविष्करोति, अथ यदुज्ज्वलतीति। एतद्ब्रह्मणो हिरण्यगर्भस्य स्रष्टुः रूपं स्वरूपं, विष्णोः पालकस्य परमं पदं स्वरूपं, एतदेव च रुद्रस्य संहर्तुः रुद्रत्वं स्वरूप, एतदेव तदात्मरूपं ब्रह्माऽपरिमितधा आत्मानं विभज्य देवतिर्यङ्मनुष्यादिभेदेनाविद्ययात्मानमनेकधा विभज्येमान् लोकान् पूरयतीत्येवं ह्याह, वह्नेश्च यद्वदिति। पूर्वार्द्धं स्पष्टार्थं। प्राणादयो वै प्रसिद्धाः पुनरेवेति सुषुप्तिप्रलययोः प्रलीनाः पुनः पुनस्तस्मादभ्युच्चरन्तीह प्रबोधसृष्ट्योर्यथाक्रमेण पूर्वसृष्टिक्रमेणेत्यर्थः। तथा च श्रुत्यन्तरे ‘यथाग्नेः क्षुद्रा विस्फुलिङ्गा

**अथान्यत्राप्युक्तं ब्रह्मणो वावैतत्तेजः परस्यामृतस्याशरीरस्य *यच्छरीरस्यौष्ण्यमस्यैतत् घृतमथाविः-**

---

व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृहदा० अ० ४) इति॥ २६॥

इदानीं प्रकारान्तरेण हृदन्तर्ज्योतिषमात्मानमुपलम्भयन् सफलामात्मनिष्ठामुपदिशति "अथान्यत्राप्युक्तं ० तेजस्त्वेवाग्निसूर्ययोः" इति। ब्रह्मणो वाव परमात्मन एवैतद्वक्ष्यमाणं तेजः, किंलक्षणस्य परस्य सर्वदृश्यस्वभावातीतस्यात एवामृतस्य जन्मादिमरणान्तविक्रियारहितस्येति यावत्। स्वतः परममृतमपि ब्रह्मतेजः शरीरसम्बन्धात् विपरीतं स्यादित्यतो विशिनष्टि, अशरीरस्येति। शरीरसम्बन्धरहितस्य, न हि निरवयवस्यासङ्गस्य जतुकाष्ठवत् शरीरसंश्लेषोऽस्तीति भावः। एवंविधस्य ब्रह्मणो वावैतत्तेज इति सम्बन्धः। किं तदित्याह। यच्छरीरस्यौष्ण्यं शरीरसम्बन्ध्याग्नेयं यदौष्ण्यमुपलभ्यते स्पर्शनेन प्रत्यक्षेण तद्ब्रह्मणस्तेज इत्यर्थः। तथा च छान्दोग्ये 'यदतः परो दिवो ज्योतिर्दीप्यते' इत्युपक्रम्य 'इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति' इति। अस्य तेजस एतत् प्रसिद्धं शरीरं घृतं, अनेन हि तद्ब्रह्मतेजोऽन्यत्राप्रकाशमानमग्निरिव घृतेन दीप्यते। एवं

---

* यच्छरीरस्येति लिखितं।

सन्नभसि निहितं वैतदेकाग्रेणैवमन्तर्हृदयाकाशं वि-
नुदन्ति यत्तस्य ज्योतिरिव सम्पद्यतीत्यतस्तद्भावम-
चिरेणैति भूमावयस्पिण्डं निहितं यथाऽचिरेणैति

सामान्येन देहगतौष्ण्यात्मना ब्रह्मतेजः सम्भावनापदं नीत-मिदानीं तस्य साक्षात्कारपदवीमुपदिशति, अथाविः सन्निति। अथैवं सम्भावितं तत्तेजः आविः प्रकटं सन्नभसि हृदयाकाशे निहितं स्थितं वै निश्चितं सर्वश्रुतिष्वेतदित्यर्थः। तथा च मुण्डके 'आविः सन्निहितं गुहाचरं नाम महत्पदं' इति तत्तेज एवमुक्तप्रकारमुद्दिश्यान्तर्हृदये हृदयपुण्डरीके यदाकाशं तदेकाग्रेण चित्तसमाधानेन विनुदन्ति विशेषेण नुदन्ति हृदयपुण्डरीकविकासनेन तत्स्थमाकाशमाविष्कुर्वन्तीत्यर्थः। ए। क्रियमाणे तस्याकाशस्य सम्बन्धि यज्ज्योतिरिव प्रकाश इव नित्यसिद्धमप्यावरणतिरोधानमात्रापेक्षयोद्भूतप्रकाश इव सम्पद्यति सम्पद्यते अभिव्यक्तं जायत इत्यर्थः। इति यतः स्वतः सिद्धं तेजोऽभिव्यज्यतेऽतस्तद्भाव तस्य तेजसो भावं स्वभाव-मचिरेणाल्पकालेन सद्य एव एति प्राप्नोत्युपासकः। तस्य प्रत्यग्रूपत्वेन नित्यप्राप्तत्वात्, तदावरणतिरोधानमात्रमपेक्ष्य प्राप्तिरुपचर्यत इति भावः। तत्रोपाध्याकारप्रतिबन्धनिवृत्त्या-ऽचिरेण स्वस्वरूपापत्तौ दृष्टान्तमाह, भूमाविति। भूमौ निहितमन्तर्भूमौ निक्षिप्तमयस्पिण्डं पिण्डीभूतमयो यथा-

**भूमित्वं मृद्वत्संस्थमयस्पिण्डं यथाग्न्ययस्कारादयो नाभिभवन्ति प्रणश्यति चित्तं तथाश्रयेण सहैवमित्येवं ह्याह।**

---

ऽचिरेण भूमित्वं मृद्भावमुपैति गच्छति मृदेव भवतीत्यर्थः, तथा सम्यक् स्वरूपापन्नस्य पुनरनुत्थानमेवेति, अत्रापि दृष्टान्तमाह, मृद्वत्संस्थमिति। मृद्वत् साक्षात् मृत्तिकेव संस्था स्थितिर्यस्य तन्मृद्वत्संस्थं, अत्र वतिप्रयोग उक्तिभङ्गीमात्रो मृदात्मना स्थितमित्यर्थः। यथा मृदात्मतां गतमयस्पिण्डमग्न्ययस्कारादयो नाभिभवन्ति अग्निना प्रागयस्पिण्ड इव तस्मिन्नभिव्यक्तप्रकाशेन न दह्यते न वाऽयस्कारैर्लोहकारैर्विकारीक्रियत इत्यर्थः। दार्ष्टान्तिकमाह, प्रणश्यति इति। यथेमौ दृष्टान्तौ तथा चित्तं चित्तस्थश्चिदाभासो जीवाख्य आश्रयेणोपाधिना चित्तेन सह प्रणश्यति निराभासज्योतीरूपमापद्यते इत्यर्थः। यद्वा चित्तं साभासमन्तःकरणं आश्रयेण वासनात्मकलिङ्गेन सह प्रणश्यति प्रकर्षेण नश्यति उच्छिन्नसंस्कारं भवति पुनर्नोत्पत्त्यर्हं भवतीत्यर्थः। एवमेवैतन्नान्यथेत्येवमर्थमाह श्लोक इत्यर्थः। हृद्याकाशमयं आकाशवदसङ्गं यद्वा हृदये यदाकाशं तत्स्वरूपं हृद्याकाशमयं, कोशो भाण्डाकारस्तद्वत् सर्ववस्त्वाश्रयत्वात् कोशमिव कोशं, लिङ्गव्यत्ययः छान्दसः। तथा च हार्दाकाशं प्रकृत्य श्रुत्यन्तरं 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसा-

**हृद्याकाशमयं कोशमानन्दं परमालयं ।**
**स्वं योगश्च ततोऽस्माकं तेजश्चैवाग्निसूर्ययोः ॥ २७ ॥**

**अथान्यत्राप्युक्तं भूतेन्द्रियार्थानतिक्रम्य ततः प्रव्रज्याज्यं धृतिदण्डं धनुर्गृहीत्वाऽनभिमानमयेन चैवे-**

वुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितं' (छां० अ० ८) इति। आनन्दयतीत्यानन्दं 'एष ह्येवानन्दयाति' इति श्रुतेः। परमालयं आसमन्ताल्लीयतेऽस्मिन् सर्वमित्यालयं परमं च तदालयं च परमालयं मुक्तिरूपमित्यर्थः। एवम्भूतं यद्ब्रह्मरूपं तेजस्तदस्माकं स्वं स्वरूपं योगश्च, युज्यत इति योगः, फलं पुरुषार्थः सोऽप्येतदेवेति योजना। यत एवमतोऽस्य सर्वात्मकत्वादग्निसूर्ययोश्च तेज एतदेवेत्यर्थः। तथा च भगवद्वचनं।

अविभक्तञ्च भूतेषु विभक्तमिव च स्थित।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तत् ज्योतिस्तमसः परमुच्यते। इति ॥ २७ ॥

इदानीमुक्तस्य ब्रह्मतेजस उपलम्भे योगविशेषमुपदिशति "अथान्यत्राप्युक्तं ० न कदाचन" इति। भूतपदेन तत्सङ्घातो देहो गृह्यते, इन्द्रियाणि प्रसिद्धानि, अर्थाः शब्दादयो विषयाः। देहेन्द्रियविषयानतिक्रम्य तेष्वहंममाभिमानं त्यक्त्वा ततोऽनन्तरं प्रव्रज्या सन्यास एव ज्या यस्य तत्प्रव्रज्याज्यं, धृतिर्धैर्यं

**षुणा तं ब्रह्मद्वारपारं निहत्याद्यं सम्मोहमौली तृष्णेर्ष्याकुण्डली तन्द्रीराघवेत्र्यभिमानाध्यक्षः क्रोधज्यं प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु**

---

दण्डः काण्डं यस्य तद्धृतिदण्डं, एवंविधं धनुर्गृहीत्वा धैर्यमास्थाय तस्मिन्नसङ्गतालक्षणां ज्यामारोप्येत्यर्थः । तस्मिन् धनुषि संहितेनानभिमानमयेन चकाराद्विवेकश्रितेन चेषुणैव विद्याचारकुलादिनिमित्ताभिमानपरित्यागात्मकेन दृग्दृश्यविवेकोपकृतेन च यथोक्तानभिमानमयेन यथोक्तविवेकतीक्ष्णेनेषुणेति यावत् । तमाद्यमिति सम्बन्धः । तं प्रसिद्धमाद्यं सर्वानर्थकारणमहङ्काराख्यं ब्रह्मद्वारपारं हार्दस्य ब्रह्मणः प्राप्तिद्वारस्य पारं पालं, रलयोरभेदात्, द्वारनिरोधकरमित्यर्थः । एवम्भूतं निहत्य हत्वा ब्रह्मशालां विशेदित्युत्तरत्र सम्बन्धः । सङ्क्षेपेणोक्तं विवृण्वती श्रुतिरहङ्कारस्य हन्तव्यत्वे हेतुं सूचयति, सम्मोहेत्यादिना । सम्मोहो मिथ्याज्ञानं मौलिरुष्णीषमस्यास्तीति सम्मोहमौली । तृष्णा विषयचापलं, ईर्ष्या परोत्कर्षासहनञ्च कुण्डले यस्य विद्येते स तृष्णेर्ष्याकुण्डली । तन्द्री सत्कर्मस्वालस्यं, द्रा निद्रा, अघं पापं चेत्येतानि वेत्रं यष्टिविशेषो यस्य स तन्द्रीराघवेत्री । अभिमानः स्वोत्कर्षाभिनिवेशस्तस्याध्यक्षोऽधिष्ठाय प्रवर्तयिता प्रागुक्तोऽहङ्कारः साभासः सः । क्रोधज्याकं प्रलोभदण्डं धनुर्गृहीत्वा

**भूतानि हन्ति तं हत्वोङ्कारप्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाविर्भूतेऽन्तराकाशे शनकैरवटैवावटकृद्धातुकामः संविशत्येवं ब्रह्मशालां विशेत् ततश्चतुर्जालं ब्रह्मकोशं प्रणुदेद्गुर्वागमेनेत्यतः शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः**

— —

दिच्छामयेन स्वच्छन्दापरपर्यायत्वाच्चरूपेण चकारादविवेकनिश्चितेन चैवैषुणेमानि प्रसिद्धानि खलु भूतानि स्थावरजङ्गमात्मकानि हन्ति पीडयति, तमेनं सर्वपीडाकरत्वाद्धन्तव्यं हत्वा उन्मूल्योङ्कारप्लवेन तरणसाधनेनान्तर्हृदयाकाशस्य सर्वजगदाश्रयतयाऽव्याकृताख्यस्य पारं परतीरं तदधिष्ठानं सर्वसाक्षिभूतं तीर्त्वा प्राप्य, आविर्भूतेऽन्तराकाशे ब्रह्माकाशेऽभिव्यक्ते सति शनकैः शनैरसंभ्रमेण ब्रह्मशालां विशेदिति सम्बन्धः। शनैस्तदनुप्रवेशे दृष्टान्तमाह, अवटैवेति। सन्धिवृद्धी छान्दसे। अवट इवेत्येतत्। यथा कश्चिद्धातुकामः सुवर्णादिधातूनन्तर्भूमौ निहितान् कामयमानोऽवटकृद्गर्तकर्ताऽवटे तस्मिञ्छनैः संविशति प्रकटीभूतं धातुं पश्यन्नेवं प्रादुर्भूतब्रह्मशालां ब्रह्मप्रकाशस्थानं साक्षित्वेनावशेषितं प्रत्यगेकरसमात्मानं विशेत्, ततस्तत्प्रवेशानन्तरं चत्वारि जालान्युपर्युपरि वेष्टनानि यस्मिंस्तच्चतुर्जालं ब्रह्मकोशं ब्रह्मणः कोशवदाच्छादकमन्नमयप्राणमयमनोमयविज्ञानमयाख्यैश्चतुर्भिः कोशैः परिवेष्टितमानन्दमयकोशं प्रणुदेत् प्रेरयेद्भिन्द्यादिति यावत्। केन

**स्वतन्त्रः स्वे महिम्नि तिष्ठत्यतः स्वे महिम्नि तिष्ठमानं दृष्ट्वाऽऽवृत्तचक्रमिव सञ्चारचक्रमालोकयतीत्येवं ह्याह।**

**षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिनः।**
**अनन्तः परमो गुह्यः सम्यग्योगः प्रवर्तते॥**
**रजस्तमोभ्यां विद्धस्य सुसमिद्धस्य देहिनः॥**
**पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन॥ २८॥**

---

साधनेन गुर्वागमेन गुरूपदिष्टेनागमेन वेदान्तवाक्येनानन्दमयकोशाश्रयं ब्रह्मैव प्रत्यगात्मेत्यागमाचार्याभ्यां निश्चित्य कोशेष्वात्माभिमानं त्यजेदित्येष क्रम इत्यर्थः। अतोऽनन्तरमतः कारणात् सर्वप्रतिबन्धनिवृत्तेरिति वा, शुद्धः पूत इत्यादिविशेषणः स्वे महिम्नि तिष्ठति, अतोऽनन्तरं स्वे महिम्नि स्वस्वरूपे तिष्ठमानमवतिष्ठमानमात्मानं दृष्ट्वा आवृत्तचक्रमिव परावृत्तचक्रमिव संसारचक्रमालोकयति यथा रथादुत्तीर्णो रथचक्रं परावृत्तव्यापारं दूरत एवावेक्षते कश्चित् तथा विद्वान् ब्रह्मसम्पन्नः संसारचक्रं दूरादेवावलोकयति न पूर्ववत् स्वसम्बन्धितयेत्यर्थः। इत्येवं ह्याह, श्लोकाभ्यामुक्तमर्थजातमित्यर्थः। नित्यमुक्तस्य शितेन्द्रियस्य अभिमानशून्यस्य षड्भिर्मासैस्तु युक्तस्य योगनिरतस्य प्रागुक्तवर्त्मना प्रणवाभ्यासं कुर्वतो देहिनोऽनन्तः परमो गुह्यः सम्यग्योगः परमात्मसम्पत्तिलक्षणः प्रवर्तते सिद्ध इत्यर्थः। सुसमिद्धस्य विद्याविनयाचारैः सुदीप्तस्याऽपि देहिनो

**एवमुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वाऽनया ब्रह्मविद्यया राजन् ब्रह्मणः पन्थानमारूढाः पुत्राः प्रजापतेरिति सन्तोषं द्वन्द्वतितिक्षां शान्तत्वं योगाभ्यासादवाप्नोतीत्येतद्गुह्यतमं नापुत्राय नाशि-**

रजस्तमोभ्यां गुणाभ्यां विद्धस्य परवशस्य तावमुञ्चतः पुत्रादिष्वत एव सक्तस्य न कदाचन सम्यग्योगः प्रवर्तत इत्यर्थः ॥ ॥ १८ ॥

इदानीं वालखिल्याख्यायिकामुपसंहरन्नुक्तयोः सगुणनिर्गुणविद्ययोः सम्प्रदानविशेषमुपदिशति शाकायन्य इत्यादि । "एवमुक्त्वान्तर्हृदयः ० सम्पन्नाय दद्यात्" इति । एवममुना प्रकारेण ब्रह्मविद्यामनेकप्रकारां दृष्टद्रष्टायोक्त्वान्तरेव प्रत्यक्त्वे हृदयं बुद्धिर्यस्य सोऽन्तर्हृदयः शाकायन्यः ऋषिस्तस्मै ब्रह्मणे स्वगुरवे वा नमस्कृत्वाऽनया मया तुभ्यमुक्तया ब्रह्मविद्यया परापरब्रह्मविषयया हे राजन् ब्रह्मणो यथोक्तस्य पन्थानं ब्रह्मप्राप्तिमार्गमारूढाः प्रजापतेः क्रत्वाख्यस्य पुत्रा वालखिल्यसञ्ज्ञिता मुनय इत्युवाचेति योज्यं । योगाभ्यासात् सन्तोषाद्यवाप्नोतीत्येवं चोवाचेत्यध्याहारः । एतदुक्तं ब्रह्मज्ञानं गुह्यतममतिगोप्यं रहस्यतममपुत्राय न कीर्तयेन्नोपदिशेत्, तथा अशिष्याय शिष्यवृत्तिरहिताय न कीर्तयेत् । शिष्यत्वे पुत्रत्वे च यद्यशान्तः साभिमानस्तस्मै अशान्ताय न कीर्तयेत्, तस्माच्छान्ताय शिष्याय पुत्राय वा कीर्तयेन्नान्यस्मै कस्मैचनेत्यर्थः ।

ष्याय नाशान्ताय कीर्तयेदित्यनन्यभक्ताय सर्वगुण-सम्पन्नाय दद्यात् ॥ २९ ॥

ओम् शुचौ देशे शुचिः सत्त्वस्थः सदधीयान सद्वादी सद्ध्यायी सद्याजी स्यादित्यतः सद्ब्रह्मणि सत्यभिला-

---

तथा चोक्तं श्रुत्यन्तरे 'वेदान्ते परमं गुह्यं पुराकल्पप्रचोदितं। नाप्रशान्ताय दातव्यं नापुत्त्राशिष्याय वा पुनः' (श्वे०) इति। फलितमाह। अनन्यभक्तायाचार्यैकभजनपराय सर्वगुणसम्पन्नाय दद्यादिदं ज्ञानमित्यर्थः। शिष्यगुणास्तु श्रुतिस्मृतिपुराणसिद्धाः संगृह्य भगवत्पादैराचार्यैरुक्ताः 'प्रशान्तचित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे। गुणान्वितायानुगताय सर्वदा प्रदेयमेतत् सततं मुमुक्षवे' इति॥ २९ ॥

इदानीमध्यायशेषेण प्रकीर्णानि कानिचित् साधनानि साधारणानि क्वचिदसाधारणानि चोपदेष्टुं प्रवर्तते श्रुतिः "ओम् शुचौ देशे शुचिः० परमां गतिं" इति। शुचौ देशे गिरिनदीपुलिनगुहादिशुद्धस्थाने उपविश्येति योज्यं, शुचिः बाह्याभ्यन्तरशुद्धिसम्पन्नः, सत्त्वस्थः सत्त्वगुणस्थः प्रसन्नचित्त इति यावत्। सदधीयानः सदध्यात्मशास्त्राद्यभ्यसन्, सद्वादी सद्ब्रह्म-तद्वदनशीलः। सद्ध्यायी ब्रह्मध्यानपरायणः, सद्याजी ब्रह्म-यजनशीलः, यजनं तस्येश्वररूपस्य मानसैरुपचारैरभ्यर्चनं। एवं कुर्वन् स्यात् भवेत् मुमुक्षुरिति शेषः। इति यतोऽतः सद्ब्रह्मणि

षिणि निर्वृत्तोऽन्यस्तत्फलच्छिन्नपाशोनिराशः परेष्वा-त्मवद्विगतभयो निष्कामोऽक्षय्यमपरिमितं सुखमाक्रम्य तिष्ठति परमं वै शेवधेरिव परस्योद्धरणं यत् निष्कामत्वं स हि सर्वकाममयः पुरुषोऽध्यवसायसङ्कल्पाभिमान-

---

निर्वृत्तोऽपरिमितं सुखमाक्रम्य तिष्ठतीति सम्बन्धः। सदेव सोम्येदमिति ब्रह्मणि सच्छब्दश्रवणात् सदाख्यं ब्रह्म, तस्मिन् सदाख्ये ब्रह्मणि किंलक्षणे, सति अभिलाषिणि सति सद्धर्मनिरते पुंस्यभिलाषवति सदनुग्रहेच्छावतीति यावत्, निर्वृत्तो निष्पन्नो ब्रह्मणि सम्पन्नो ब्रह्मात्मभावमुपगतोऽत एवान्यः सङ्घाताभिमानिनो जीवरूपादन्योऽपरिच्छिन्नः, तत्फलच्छिन्नपाशस्तस्य ब्रह्मणो यत्फलं स्फूर्तिः प्रतिभासस्तेन छिन्नसंसारवासनापाशोऽत एव निराशः प्राप्तव्यविषयाशाशून्यः सर्वात्मब्रह्मरूपत्वात् परेषु जीवान्तरेष्वात्मवदात्मनीव विगतभयो निरातङ्कः न चास्य द्वितीयदर्शननिमित्तं भयं भवतीत्यर्थः, आत्मा ह्येषां स भवतीति श्रुत्यन्तरात्। यतो निष्कामः, कामवतो हि तदुपघातनिमित्तं भयं भवति, कामश्च देहाद्यभिमानपुरःसरः, तद्रहितोऽयं निष्कामत्वात् निर्भय इत्यर्थः। अतोऽक्षय्यं क्षेतुमशक्यमविनाशीति यावत्, अपरिमितमपरिच्छिन्नं वैषयिकसुखविलक्षणमित्येतत्, एवंविधं सुखमाक्रम्यात्मसात्कृत्वा तिष्ठति परमानन्दमश्नुत इत्यर्थः। निष्कामत्वमुक्तं स्तौति तस्य सर्वसाधनेभ्यः श्रैष्ठ्यं द्योत-

लिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तोऽत्रैक आहुर्गुणः प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागतोऽध्यवसायस्य दोषक्षयाद्धि मोक्षो मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृति-

---

यितुं परमं वा इति। यत् निष्कामत्वं तत् शेवधेर्निधेरिव परस्य परमात्मनः परमं सर्वोत्तममुद्धरणं प्रकटीकरणं वै प्रसिद्धं विद्वज्जनेष्वित्यर्थः। एतच्च दुर्घटमिति द्योतयन् पुंसः स्वभावं सङ्कीर्तयति, स हीत्यादिना। हि यस्मात् स पुरुषः स्वभावतः सर्वकाममयः सर्वविषयकामाकुलः यतोऽध्यवसाय-सङ्कल्पादिलिङ्गस्तद्वत्तया काममयत्वमवगम्यत इत्यर्थः। अत एवायं बद्धो यतः काममयो बद्धोऽतस्तद्विपरीतोऽकाममयो मुक्त एवेत्यकामात्मता सम्पाद्या मुमुक्षुणेति भावः। इदानीमत्र मतान्तरं साङ्ख्यदृष्टिविषयमुत्थापयति स्वमतपरिशुद्धये, अत्रैक आहुरिति। गुणो गुणकार्यं महदाख्यं बुद्धितत्त्वं प्रकृतिभेदवशात् पूर्ववासनात्मकस्वभावविशेषवशादध्यवसायात्मबन्धं विषयाध्यवसायादिरूपं बन्धनमुपागतः, न चिदात्मेत्यर्थः। अध्यवसायस्य यो दोषो बहिर्विषयप्रवणता तस्य क्षयान्नाशाद्विषयवासनाविच्छेदाद्धि मोक्षः पूर्वोक्तस्य गुणस्यैवेत्यर्थः। अत्रेतिशब्दोऽध्याहार्यो मोक्ष इति इत्येक आहुरिति सम्बन्धः। उत्थापितं मतं व्युत्थापयति, मनसा हीति। अन्तःकरणाभिमतस्य बुद्धि-

ह्रीर्धीर्भीरित्येतत्सर्वं मन एव गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयाता इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानं जालेनेव खचरोऽतः पुरुषोऽध्यव-

---

तत्त्वस्य करणविभक्त्या परामर्शात् सर्वश्रुतिषु न तस्य कर्तृत्वमवगन्तुं शक्यं, यतो मनसैव हि पश्यति लोकश्चक्षुषा यद्रूपं पश्यति तन्मनसैव पश्यति, मनोव्यासङ्गे सति चक्षुः सम्बद्धस्याप्यप्रतिभामात्, 'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति' (बृहदा०) इत्यन्वयव्यतिरेकाभ्यां श्रुत्यन्तरे मनोवु हङ्कारशब्दवाच्यस्यान्तरात्मनः करणत्वावधारणात् न तस्य कर्तृत्वमिति तात्पर्यार्थः। विचिकित्सा संशयः, प्रसिद्धार्थमन्यत्, एतत् सर्वं मन एव मनोविकारत्वात्, सुवर्णं कुण्डलमितिवन्मनोऽभेदेन तद्धर्मत्वं कामादीनामवधार्यते, कर्तृधर्मत्वभ्रान्तिव्यावृत्तय इत्यर्थः। ननु यद्येते कामादयो न कर्तृधर्माः कथं तर्हि कर्त्राश्रयतयाऽहं कामीत्यादिरूपेण प्रतिभास इति चेन्नायं दोषोऽन्तःकरणोपाधिनिबन्धनत्वात्, कर्तृत्वस्य चात्मना तादात्म्याध्यासाधीनत्वादेव प्रतिभासोपपत्तिः स्फटिकमणेरिवौपाधिको लौहित्यप्रतिभास इत्यभिप्रेत्याह, गुणौघैरुह्यमान इति। गुणानां सत्त्वादीनां मायागुणानामोघाः प्रवाहा देहद्वयतद्धर्मरूपाः, तैरुह्यमानः परवशीक्रिय-

**सायसङ्कल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्त-स्तस्मात् निरध्यवसायो निःसङ्कल्पो निरभिमानस्ति-ष्ठेदेतन्मोक्षलक्षणमेषात्र ब्रह्मपदव्येषोऽत्र द्वारविवरोऽ-**

---

माणोऽभिमानिलं प्रयात इत्यन्वयः। जालेनैव खचर इत्यन्तं तृतीयप्रपाठके द्वितीयानुवाके व्याख्यातं। यस्मादेवमचेतनस्य बुद्धितत्त्वस्य स्वसत्तास्फूर्त्योरस्वतन्त्रस्य कर्तृत्वबन्धमोक्षभाक्त्व-मनुपपन्नं, कूटस्थस्याऽपि चिदात्मनः परोपाधिवशात् प्राति-भासिकं तत् सर्वमुपपन्नमतोऽस्माद्धेतोः पुरुषोऽध्यवसायेत्या-दिप्रासङ्गिकार्थोपसंहारः स्पष्टार्थः। प्रकृतमुपसंहरति, तस्मात् निरध्यवसाय इति। मुमुक्षुरेदकामः सन विषयाध्यवसायादि-रहितः स्यादित्यर्थः। एतद्यदकामादिलक्षणमवस्थानमेतन्मो-क्षलक्षणं मोक्षसाधनं यत एषात्र श्रेयोमार्गेषु मध्ये ब्रह्मपदवी साक्षाद्ब्रह्मप्राप्तिमार्गः, एषोऽत्र द्वारविवरो मोक्षद्वारस्योद्घाटन-मित्यर्थः। विधेयाविष्टलिङ्गभेदैर्निरध्यवसायाद्यात्मना अकामा-त्मत्वावस्थानं निर्दिश्यते। किं बहुनाऽनेनाकामात्मत्वावस्थानेनास्य संसाररूपस्य तमसः पारं परतीरं विष्णोः परमं पदं गमिष्यति अचिरेणैवात्मतत्त्वज्ञानेनोपैष्यतीत्यर्थः। एतां पदवीमधिगतस्य न पुनः प्राप्तव्यमवशिष्यत इत्याह, अत्र हीति। तथा च श्रुतिस्मृती 'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामा-न्सह' (तैत्तिरीयो०) इति, 'यावानर्थ उदपाने सर्वतः संप्लुतोदके तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' (गी०) इति। अत्रोक्तेऽर्थे

नेनास्य तमसः पारं गमिष्यत्यत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति ।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥

एतदुक्त्वान्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वा यथा-

---

निरभिमानस्य ब्रह्मपदप्राप्तिरित्यत्र उदाहरन्ति कठाः (कठोप० ६) इति शेषः । यदा यस्मिन् काले पञ्च ज्ञानानि ज्ञानेन्द्रियाणि श्रोत्रादीनि मनसा सह मनःसहितानि सर्वेन्द्रियाणीति यावत् अवतिष्ठन्ते निश्चलानि भवन्ति बुद्धिश्चाध्यवसायलक्षणा न विचेष्टते नेङ्गते, किन्तु निर्वातदेशस्थप्रदीपवन्निश्चलीभवति इत्यर्थः । येयमिन्द्रियमनोबुद्धीनां निश्चलावस्था तां परमां गतिं परमं ब्रह्मप्राप्तिसाधनमाहुर्ब्रह्मविद इत्यर्थ । इदानीं शाकायन्यस्य वृत्तान्तं कथयन्ती श्रुतिः सगुणब्रह्मोपासकानां ब्रह्मप्राप्तिद्वारमुपदिशति तच्चिन्तनार्थं "एतदुक्त्वान्तर्हृदयः ० आदित्य इति" इति । एतदुक्तं सर्वं दर्शनं समाधनमुक्त्वा-ऽन्तर्हृदयोऽन्तरात्मनि हृदयं बुद्धिर्यस्य सोऽन्तर्हृदयः शाकायन्य उपररामेत्यध्याहारः । मरुन्मरुन्नामा बृहद्रथस्तस्मै शाकायन्याय नमस्कृत्वा यथावदुपचारी यथाशास्त्रं शुश्रूषापूजाद्युपचारपरः कृतकृत्योऽवाप्तकाम उत्तरायणं ब्रह्मपथं गतः सगुणनिर्गुणब्रह्मज्ञानमुपगत इत्यर्थः । न ह्यत्रोक्ततत्त्वनिष्ठायामुद्गतमनोन्मार्गेण तिर्यगादिमार्गेण गतिर्गमनमस्तीति शेषः ।

वदुपचारी कृतकृत्यो मरुदुत्तरायणं गतो न ह्यत्रो-दवर्त्मना गतिरेषोऽत्र ब्रह्मपथः सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गता इत्यत्रोदाहरन्ति ।

---

यत एष उक्तविद्यारूपोऽर्थोऽत्र श्रेयोमार्गेषु ब्रह्मपथो ब्रह्मप्राप्ति-मार्ग इत्यर्थः । अत्र 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनी-यन्ते ब्रह्मैव सन् ब्रह्माप्येति' (शत० ब्रा० का० १४। अ० ७) इति श्रुतेर्निर्गुणब्रह्मात्मतत्त्वविदो नोत्क्रमणमस्तीत्येतत्सिद्धवत्कृत्य सगुणब्रह्मविदो ब्रह्मलोकमार्गं क्रममुक्तेर्द्वारं विस्पष्टमाह श्रुतिः, सौरमिति । सौरं द्वारं सूर्यमण्डलमध्यगतमविदुषामभेद्यं द्वारं भित्त्वा विदार्य ऊर्ध्वेनोपरितनेन विद्युदादिना विनिर्गता उपासका इत्यत्रास्मिन्नर्थे रश्मिविशेषनिर्द्धारणायमुदाहरन्ति श्लोकानिति शेषः । अथवा मरुदुत्तरायणं गत इति मरुन्नाम्नो राज्ञ एव वृत्तान्तः कथ्यते । तथा चायमर्थः, उत्तरायणं देवयानं पन्थानं गतः कालेनारूढो न साक्षात् कैवल्यमत्रैव गत इत्यर्थः । यदि साक्षान्मुक्तिं न प्राप तर्हि भोगान्ते संसारः स्यादित्यत आह, न ह्यत्रेति । अत्रोपासनायां सत्यामुदवर्त्मना संसारमार्गेण पुनर्गतिर्गमनं न ह्यस्ति 'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' इति भगवत्स्मरणात् । यत एष देवयानोऽत्रोपासनायां ब्रह्मपथो ब्रह्मणः परस्यापि क्रमेण प्रापकत्वात् ब्रह्मपथ इत्यर्थः । सौरद्वारं भित्त्वोर्ध्वेन विनिर्गता मरुन्नामा राजर्षिः, अत्रोदाहरन्ति इति पूर्ववत् । तस्य

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि।
सितासिताः कद्रुनीलाः कपिला मृदुलोहिताः॥
ऊर्द्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलं।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिं॥

---

रश्मयो निर्गमननाड्यश्चिदाभासव्याप्ता अनन्ताः, कस्य, यो हृदि ध्यानकाले दीपवत् प्रकाशमान आत्मा स्थितस्तस्येत्यर्थः। आत्मनिर्गमननाड्यन्तर्गतानां रसानां वातपित्तकफानां समन्यूनाधिकभाववशात् सितादिवर्णास्तासु भवन्ति, तद्युत्पादनं तु वैद्यके सिद्धं, तदेतदाह सितेति। सिताश्चासिताश्च सितासिताः कफबाहुल्ये सिताः वायुबाहुल्ये त्वसिता इत्यर्थः। कद्रवश्च नीलाश्च कद्रुनीलाः वायुकफयोः कुपितयोः सङ्करे कद्रवः कद्रुवर्णा ईषत्कृष्णाभा इत्यर्थः। पित्तवाय्वोः सङ्करे नीलवर्णाः, पित्ताधिक्ये कपिलाः, मृदवश्च ते लोहिताश्च मृदुलोहिताः, उद्रिक्तेन पित्तेनांशतो वायुकफयोर्योगात् मृदुलोहिता रश्मयो नाड्यन्तर्गता भवन्तीत्यर्थः। तथा च श्रुत्यन्तरं 'तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च' (वृहदा० अ० ६) इति। तथा नाडीः प्रकृत्य 'ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य पूर्णाः' (छान्दो० अ० ८) इति च। तेषां रश्मीनां मध्ये एको रश्मिः सुषुम्नाख्य ऊर्द्ध्वं ब्रह्मरन्ध्रपर्यन्तं स्थितः, कोऽसौ यः सुषुम्नाख्येन सूर्यरश्मिविशेषेणैकीभूतत्वात् सूर्यमण्डलं भित्त्वा स्थितः स इत्यर्थः। तेन रश्मिमार्गेण कार्यब्रह्मलोकं गत्वा तत्र

यदस्यान्यद्रश्मिशतमूर्द्ध्वमेव व्यवस्थितं।
तेन देवनिकायानां स्वधामानि प्रपद्यते॥
ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः।
इह कर्मोपभोगाय तैः संसरति सोऽवशः॥

---

भोगान्ते तमतिक्रम्य परां गतिं तद्विष्णोः परमं पदं शाश्वतं परं ब्रह्म यान्त्युपासका इत्यर्थः। 'शतं चैका च हृदयस्य नाड्यस्तासां मुर्द्धानमभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (कठो० ६) इत्यस्मिन् मन्त्रे तासां मूर्द्धानमभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति इति पादद्वयस्यार्थमुक्त्वा प्रथमपादोपात्तशतरश्म्युपयोगमाह, यदस्येति। अस्य हृदयस्य सम्बन्धि यद्रश्मिशतमस्ति तदप्यूर्द्ध्वमेवोर्द्ध्वगतिहेतुभूतमेव व्यवस्थितं, तेन रश्मिशतेन निर्गतो देवनिकायानां देववृन्दानां स्वधामानि तत्तद्देवस्थानानि प्रपद्यते, देवनिकायमध्ये यं देवविशेषं यः कर्मणा विद्यया चोपास्ते स रश्मिशतस्थेकेन केनचिद्रश्मिना तस्य देवस्य पदं यातीत्यर्थः। विष्वङ्ङन्या उत्क्रमणे भवन्तीति चतुर्थपादार्थमाह ये नैकरूपा इति। ये तस्य हृदयस्य रश्मयोऽनेकरूपा अधस्तादधोमुखा मृदुप्रभा अत्यल्पप्रकाशास्तमोबहुला रश्मयस्तैर्निर्गतः स विहितज्ञानकर्मसाधनरहितः पुमान् दुःखकर्मोपभोगाय इहैव भूमावेवावशः सन् संसरति दुःखमनुभवतीत्यर्थः। तथा च श्रुत्यन्तरं 'य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं'

**तस्मात् सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्य इति ॥ ३० ॥**

**किमात्मकानि वा एतानीन्द्रियाणि प्रचरन्त्युद्गन्ता**

(बृहदा० अ० ८) इति । सूर्यमण्डलान्तर्गतब्रह्मोपासनमुपसंहार-व्याजेन प्रशंसति तस्मादिति । असावादित्यो भगवानादित्यात्म-नाभिव्यक्त ईश्वरोऽनुपासितः सन् सर्गहेतुः उपासितस्तु स्वर्गाप-वर्गयोर्हेतुः, देवताबुद्ध्योपासितः स्वर्गहेतुर्ब्रह्मात्मनोपासितोऽपवर्ग-हेतुरिति विभागः ॥ ३० ॥

समाप्ता शाकायन्यबृहद्रथाख्यायिका । इदानीं श्रुतिरेव प्रश्नप्रतिवचनरूपेण स्वरूपेण चेन्द्रियादितत्त्वं नामरूपात्मककार्य-तत्त्वमित्याद्यनेकानर्थान् प्रागनुक्तानुपदेष्टुं प्रवर्तते "किमात्म-कानि ० रश्मिभिर्विषयानत्ति" इति । एतानि ज्ञानकर्मार्था-नीन्द्रियाणि किमात्मकानि वै किमुपादानकानीत्यर्थः, प्रच-रन्ति स्वस्वविषयेष्वितिशेषः । एषामिन्द्रियाणामुद्गन्तोद्गमनकर्ता च निमित्तभूतोऽधिष्ठाता च क इत्यर्थः । इह व्यवहारसमये को वैतेषामिन्द्रियाणां नियन्ता तैर्व्यवहर्ता वा को भवती-त्याह कश्चित्प्रष्टेत्यध्याहारः । कश्चिदन्यः प्रत्याह प्रत्युत्तरमाह प्रश्नक्रमेणेत्यर्थः । आत्मात्मकानि आत्मा वक्ष्यमाणलक्षणस्तदा-त्मकानि तदुपादानकानीत्यर्थः । इतीत्थमात्मा हि एव एषा-मिन्द्रियाणामुद्गन्ता नियन्ता च नान्यस्य घटादेरिवेत्यर्थः । अप्सरस इति विषया उच्यन्ते, शब्दादयो हि विषयाः

चैतेषामिह को नियन्तेंत्याह प्रत्याहारात्मकानी-
त्यात्मा ह्येषामुपहन्ता नियन्ता वाप्सरसो भानवीयाश्च
मरीचयो नामाथ पञ्चभी रश्मिभिर्विषयानत्ति।

---

कामिनामप्सरस इव विषयिणामभिलाषगोचरा भवन्ति तेऽपी-
न्द्रियाणां नियन्तारः, तथा च बृहदारण्यके ग्रहातिग्रहशब्दा-
भ्यामिन्द्रियाणि विषयांश्चोक्त्वा 'श्रोत्रं वै ग्रहः स शब्देनाति
ग्रहेण गृहीतः' इत्यादिनातिग्रहशब्दवाच्यविषयनियम्यत्वं ग्रह-
शब्दवाच्यानामिन्द्रियाणां समाम्नायते। तथा च विषया-
श्चेन्द्रियाणां नियन्तार इत्यर्थः। भानवीयाश्च मरीचयः सूर्य-
किरणाश्चेन्द्रियाणां नियन्तार इति नाम प्रसिद्धमेतदित्यर्थः।
भानुशब्द उपलक्षणं सर्वेन्द्रियदेवतानां दिगाद्यानां तैस्तैर्देवता-
विशेषैः केनचिद्द्वारेणानुगृहीतानीन्द्रियाणि स्वं स्वं विषयं ग्राह-
यन्तीति देवा अपि नियन्तार इत्यर्थः। अथ एवं सति
पञ्चभिः श्रोत्रादिभिर्ज्ञानेन्द्रियैरश्मिभीरश्मिशब्दनिर्दिष्टैः विषयान्
शब्दादीनत्ति भुङ्क्तेऽयमात्मेति सिद्धमित्यर्थः। कर्मेन्द्रियैर्हय-
शब्दनिर्दिष्टैर्विषयान् प्राप्नोति इत्यपि द्रष्टव्यम्। तथा चोक्तं
प्राग् द्वितीये प्रपाठके 'बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः
कर्मेन्द्रियाण्यस्य हयाः' इति एतदुक्तं भवति। इन्द्रियाणाम-
चेतनानां भौतिकत्वेऽपि चेतनैकायत्तत्वं परमार्थत इत्यात्मा-
त्मकानीत्याद्युच्यते व्यवहारतस्तु विषयालोकाद्यधीनत्वेन तन्निय-

**कतम आत्मेति । योऽयं शुद्धः पूतः शून्यः शान्तादि-लक्षणोक्तः स्वकैर्लिङ्गैरुपगृह्यः । तस्यैतल्लिङ्गमलिङ्ग-स्याग्नेर्यदौष्ण्यमाविष्टञ्चापां यः शिवतमो रस इत्येके**

— — —

म्यता चेति । यदधीनत्वमित्यमिन्द्रियाणामुक्तं स आत्मा कतम इति पृच्छति "कतम आत्मेति" इति । देहेन्द्रियमनोबुद्धि-प्राणेष्वहमहमित्युल्लिख्यमानेषु कतमः किं तेष्वन्यतमः किं वान्य एव तेभ्य इति प्रश्नार्थः । उत्तरमाह "योऽयं शुद्धः ० स्वकैर्लिङ्गैरुपगृह्यः" इति । योऽयमात्मा शुद्धः पूतः शून्यः शान्त इत्यादिना द्वितीयप्रपाठके शुद्धत्वादिलक्षण उक्तः स्वकैरसाधारणैर्लिङ्गैः स्वरूपसद्भावसाधकैरुपगृह्यो देहादिप्राणा-न्तेषु सङ्घातात्मकेषु उप समीपे तत्सन्निहितरूपतया ग्राह्य इत्यर्थः । सङ्घातादन्योऽचेतनसङ्घातं चेतयमानोऽतस्तत्साक्षितया भासमान आत्मेत्युत्तरमुक्तं भवति । स्वकैर्लिङ्गैरुपगृह्य इत्युक्तं तत्र कानि स्वकानि लिङ्गानीति जिज्ञासायां तानि मत-भेदेनानेकधोपदिशति "तस्यैतल्लिङ्गं ० प्रज्ञा तदित्येके" इति । तस्यात्मनोऽलिङ्गस्य परमार्थतो निर्धर्मकत्वेन लिङ्गरहितस्यै-तद्वक्ष्यमाणं लिङ्गं, लिङ्ग्यते ज्ञाप्यतेऽनेनेति लिङ्गं ज्ञापक मित्यर्थः । किं तदित्यपेक्षायां दृष्टान्तोक्त्यैव तदाह, अग्ने-रिति । यत् यद्वदौष्ण्यमग्नेर्लिङ्गं तप्तोदकादिगतेनौष्ण्येन यथा तत्राग्निर्लिङ्ग्यते, आविष्टं चेन्धनावेशादिनिमित्तं धूमादि च लिङ्गमग्नेः, यथा चापां लिङ्गं यः शिवतमो निरुपाधिमधुरो

ऽथ वाक् श्रोत्रं चक्षुर्मनः प्राण इत्येकेऽथ बुद्धिर्धृतिः स्मृतिः प्रज्ञा तदित्येके । अथ ते एतस्यैवं यथैवेह

---

रसः क्षीरादिष्वप्युपलभ्यमानः । रसस्य हि स्वाभाविकं स्वरूपं माधुर्यमेव अन्यथात्वं तु तस्य पार्थिवेषु परिणामविशेषोपाधिकृतमिति मधुररसो यत्र क्वाप्युपलभ्यमानोऽपां सद्भावज्ञापक इत्यर्थः । तथात्मनोऽचेतनेषु देहादिषूपलभ्यमानं चैतन्यं देहद्वयावेशकृतं प्राणादिकं च लिङ्गमिति दार्ष्टान्तिकं योज्यम् । इत्येके शाखिनो वदन्तीत्यर्थः । तथा च श्वेताश्वतराणां मन्त्रोपनिषत् 'नित्यो नित्यानां चेतनश्चेतनानां' इति । वागादिकमात्मनो लिङ्गमित्येके 'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः' इति तलवकारादयः श्रोत्रादिप्रकाशकतयात्मानं साधयन्तीत्यर्थः । अथैके बुद्ध्यादि यत् तल्लिङ्गमात्मन इति वर्णयन्तीत्यर्थः, 'न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरः' इति बृहदारण्यके (अ ५) । 'तदेतत् सञ्ज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिः स्मृतिः' इत्यादि 'प्रज्ञानस्य नामधेयानि भवन्ति' इत्यन्तं 'प्रज्ञानेत्रो लोकः' इति चैतरेयकोपनिषत्सु । उक्तानां धर्माणामात्मविशेषणत्वाभावेऽपि तत्कार्यतया स्वनिमित्तभूतात्मलिङ्गत्वं सम्भवतीत्येतद् दृष्टान्तेनोपपादयति "अथ ते एतस्यैवं ० एवाग्नेश्चेत्यत्रोदाहरन्ति" इति । अथायमपेक्षितार्थविशेषः कथ्यते ते वै उक्ता

बीजस्याङ्कुरा वाथ धूमार्चिर्विष्फुलिङ्गा इवाग्नेश्चेत्य-त्रोदाहरन्ति ।

वह्नेश्च यद्वत् खलु विष्फुलिङ्गाः
सूर्यान्मयूखाश्च तथैव तस्य ।
प्राणादयो वै पुनरेव तस्मा-
दभ्युच्चरन्तीह यथाक्रमेण ॥ ३१ ॥

तस्माद्वा एतस्मादात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वे देवाः सर्वाणि च भूतान्युच्चरन्ति

---

लिङ्गविशेषा एतस्यात्मन एवं ज्ञापका इति शेषः । कथं यथैवेह व्यवहारभूमौ बीजस्य भूम्यन्तर्गततयाऽदृश्यस्य सद्भावज्ञापका अङ्कुरा वाऽथवा अग्नेश्च सद्भावसाधका धूमादय इवेति । अत्र चैतन्याभासाश्चैतन्यस्यावस्थाविशेषा अङ्कुरा इव चिदात्मानं ज्ञाप-यन्ति । वाक्चक्षुर्बुद्धिधृत्यादयस्तु धूमादय इवाग्ने स्वप्रवृत्त्यादि-नात्मानं तद्धेतुभूतं कल्पयन्तीति विभागः । अत्रास्मिन्नुक्तेऽर्थे श्लोकमुदाहरन्ति । तमेवाह "वह्नेश्च यद्वत् ० यथाक्रमेण" इति । स्पष्टार्थः ॥ ३१ ॥

प्राणादयोऽस्मादात्मनः कथं क्रमेणाभ्युच्चरन्तीत्यपेक्षायां तदु-पपादयति "तस्माद्वा ० सत्यमिति" इति । तस्मात् शुद्धः पूत इत्याद्युक्तलक्षणात् वै एव एतस्मादुक्तानेकलिङ्गानुमितसद्भावात् आत्मनि स्वस्वरूपे स्थितादविकृतादिति यावत् । सर्वे प्राणा

**तस्योपनिषत् सत्यस्य सत्यमिति। अथ यथार्द्रैधाग्ने-रभ्याहितस्य पृथग्धूमा निश्चरन्त्येवं वा एतस्य महतो**

---

वागादयः, सर्वे लोकास्तेषां विषयाः। सर्वे वेदा वेदनानि तत्त-द्विषया बुद्धिवृत्तयः, सर्वे देवा इन्द्रियाधिष्ठातारोऽग्न्यादयः, सर्वाणि च भूतानि भूतसङ्घातोपाधिकानि भोक्तृरूपाणि स्थावरजङ्गमात्मकानि चोच्चरन्ति व्युच्चरन्ति विविधमुत्ति-ष्ठन्ति पूर्वकृतप्रज्ञाकर्मवासनानुसारेणोद्भवन्तीत्यर्थः। यस्मादेते व्युच्चरन्ति तस्यात्मन उपनिषदुपनिगमयितृत्वात् साक्षाद्रहस्यं नाम। किं। सत्यस्य सत्यमिति यदेतत् तयोपनिषदिति योजना। सदिति पृथिव्यप्तेजांसि त्रीणि भूतानि त्यदिति वाय्वाकाशौ द्वे भूते सच्च त्यच्च सत्यमितिव्युत्पत्त्या पञ्च भूतानि स्वविकारैः सह सत्यमुच्यन्ते, तस्य सत्यं परमार्थरूपमधिष्ठानं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' (छान्दो०) इति श्रुत्यन्तरादनृतस्य पञ्चभूतात्मकप्रपञ्चस्याधिष्ठानमात्मा सत्यस्य सत्यमित्युच्यत इत्यर्थः। तदेवं वाच्यस्य जगत आत्मविवर्तता-मुक्त्वा वाचकस्य तस्योत्पत्तिं वेदोत्पत्तिकथनेनाह "अथ यथा ० विश्वा भूतानि" इति। अथ नाम सृष्टिकथनोपक्रमे दृष्टान्तो यथा लोके आर्द्रैधाग्नेरार्द्रमेधो यस्य स आर्द्रैधाः, स चासावग्निश्चेत्यार्द्रैधाग्निः, तस्य आर्द्रैधोऽग्नेरित्येतत्, अभ्याहि-तस्य संधुक्षितस्य पृथगनेकप्रकारा धूमा धूमज्वाला विस्फुलिङ्गा

## भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसा इतिहासः पुराणं विद्या । उपनिषदः

---

विनिश्चरन्ति अन्यात्मान एव सन्तः उपाधिकृताकारभेदेन प्रभवन्तीत्यर्थः । एवं वै एवमेव एतस्य प्रकृतस्यात्मनो महतोऽपरिच्छिन्नस्य भूतस्य सिद्धस्य यथाभूतस्य परमार्थस्य निश्वसितं निश्वसितमिव निश्वसितमबुद्धिपूर्वकमप्रयत्नकृतमेतत् । किं । य ऋग्वेद ऋग्वेदादिरूपं यदस्ति एतदिति योजना । अथर्वणा चाङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । अचर्ग्वेदादिशब्दैर्मन्त्रभागश्चतुर्णां वेदानां गृह्यते । इतिहासादिशब्दैस्तेषामेवाष्टविधं ब्राह्मणमभिधीयते । तत्रेतिहासः पुरावृत्तकथनं 'हरिश्चन्द्रो ह वै नाम राजासीत्' इत्यादि । यथा चैव 'वालखिल्या इति ऋषयोऽथ क्रतुं प्रजापतिमब्रुवन्' इति । तथा 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' इत्यादि । 'ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' इत्यादि । पुराणं सृष्ट्यादिवाक्यसन्दर्भः 'तस्माद्वा एतस्मादात्मनि' इत्यादि । विद्या उपासनविद्यावाक्यसन्दर्भः । उपनिषदः 'तस्योपनिषत् सत्यस्य सत्यं' इत्याद्या रहस्योपदेशवाक्यरूपाः । श्लोकाः 'अत्रोदाहरन्त्येवं ज्ञाहाचित्तं चित्तमध्यस्थं' इत्येवमादयः । सूत्राणि वस्तुसङ्ग्रहवाक्यानि 'अयं वाव खल्वात्मा ते' इत्येवंविधानि । अनुव्याख्यानानि तत् सूत्रमनु तस्य विस्-

**श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि विश्वा भूतानि ॥ ३२ ॥**

**पञ्चेष्टको वा एषोऽग्निः संवत्सरस्तस्येमा इष्टका यो वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्तः स शिरःपक्षसी-**

---

ष्टार्थं कथनानि यथानन्तरमेव 'अथ य एषोच्छ्वासाविष्टम्भनेन' इत्येवमादीनि । व्याख्यानानि तस्य सूत्रार्थस्योपपादनपराणि वाक्यानि अत्रैव वालखिल्यक्रतुसंवादप्रबन्धेन प्रवृत्तानीति । अथवा ऋग्वेदादिशब्दैर्मन्त्रब्राह्मणात्मको वेदशब्दवाच्यः सर्व एव गृह्यते, इतिहासादिशब्दैश्च महाभारतादिः प्रसिद्ध एव ग्रन्थसन्दर्भोऽभिधीयते । ब्रह्मण एव प्रत्यगात्मनस्तत्तद्व्याख्यात्मनाभिव्यज्य व्यवस्थितस्येतिहासादिकर्तृत्वोपगमात् 'यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवं' इति भगवद्वचनात् । सर्वज्ञेश्वरतन्त्र एव सर्वो व्यवहार इति तात्पर्यार्थः । एतदेवोपसंहारव्याजेनाहाऽस्यैवैतानि विश्वानि भूतानि सवाचकानीत्यर्थः ॥ ३२ ॥

ब्रह्मविद्यायां वक्तव्यं विशेषमुक्त्वा पुनः संवत्सरात्मकालावयवानग्न्यवयवेषु सम्पाद्योपासनविशेषं पूर्वचानुक्तमनुक्रामति । खिलरूपत्वादस्य नात्यातीवसङ्गत्यादर इति "पञ्चेष्टको ० आनन्दी मोदी भवति" इति । अग्निहोत्र्यधिकारकमिदमुपासनमुपदिश्यते, सोऽग्निहोत्रहोमकाले गार्हपत्यादिष्वग्निषु क्रमेणेत-

**पृष्ठपुच्छवानेषोऽग्निः पुरुषविदः सेयं प्रजापतेः प्रथमा चितिः करैर्यजमानमन्तरिक्षमुत्क्षिप्ता वायवे प्रायच्छत् प्राणो वै वायुः प्राणोऽग्निस्तस्येमा इष्टका यः प्राणो व्यानोऽपानः समान उदानः स शिरःपक्षसी-**

---

च्चिन्तयेत् तद्यथा पञ्चेष्टको वक्ष्यमाणाभिः पञ्चभिरिष्टकाभिश्चीयमान एषोऽग्निर्गार्हपत्याख्यो वै संवत्सरः संवत्सरात्मत्वेन ध्येय इत्यर्थः, तस्य संवत्सरात्मनोऽग्नेरिमा अनन्तरमेव वक्ष्यमाणा इष्टकाः वसन्तादयः। तत्र वसन्तः शिरः ग्रीष्मो दक्षिणः पक्षः वर्षा उत्तरः पक्षः शरत् पृष्ठं हेमन्तशिशिराद्दतू एकीकृत्य पुच्छमित्येवं विभागमभिप्रेत्याह, शिरः पक्षसी इत्यादि। शिरः पूर्वभागः पक्षसी पक्षौ दक्षिणोत्तरभागौ पुच्छं पश्चाद्भागः पृष्ठं मध्यभागः, एतदङ्गवानेषोऽग्निः, पुरुषविदः पुरुषं विराजमात्मानं वेत्ति उपास्ते इति पुरुषवित् तस्य पुरुषविदः प्रजापतेः संवत्सरात्मनो विराजो या प्रथमा चितिः सा इयं पृथिवीति योजना। अयं गार्हपत्योऽग्निः पृथिवीसंवत्सरात्मा विराड् वसन्तादीष्टकाभिश्चितः शिरःपक्षपुच्छपृष्ठवानहमस्मीति ध्यायेदिति तात्पर्यार्थः। पुरुषविध इति पाठे पुरुषाकार एषोऽग्निरित्यर्थः। एवं ध्यायतो यजमानस्यैतदग्निकृतमुपकारमाह, करैरिति। यजमानस्य परलोकगमनावसरे तं यजमानमग्निहोत्रिणमुपासकं करैर्हस्तैरन्तरिक्षं प्रत्यु-

**पृष्ठपुच्छवानेषोऽग्निः पुरुषविदस्तदिदमन्तरिक्षं प्रजापतेर्द्वितीया चितिः करैर्यजमानं दिवमुत्क्षिप्तेन्द्राय प्रायच्छदसौ वा आदित्य इन्द्रः सैषोऽग्निस्तस्येमा इष्टका यदृग्यजुःसामाथर्वाङ्गिरसा इतिहासः पुराणं**

---

त्क्षिप्तोत्क्षिप्य वायवे हिरण्यगर्भाय सूत्रात्मने प्रायच्छत् प्रयच्छतीत्येतत् । स्थूलवायुशङ्कां वारयति, प्राणो वै वायुरिति । प्राणश्च हिरण्यगर्भः सर्वश्रुतिषु प्रसिद्धः । इति गार्हपत्याग्निविषयं ध्यानं फलञ्चोक्तम् । इदानीं हिरण्यगर्भप्राणदृष्ट्या दक्षिणाग्निध्यानप्रकारमाह, प्राणोऽग्निरिति । तस्य प्राणरूपस्य दक्षिणाग्नेरिमा इष्टकास्ताः का इति ता आह, प्राणादयः पञ्च वायवः शरीराभ्यन्तरचारिणो यथाक्रमं शिर आद्यवयवतया चितेष्टकारूपा इत्ययमप्यग्निः शिरःपक्षपुच्छपृष्ठवानित्यादि सर्वं पूर्ववद्योज्यम् । तदिदमन्तरिक्षमन्तरिक्षात्मको दक्षिणाग्निः प्रजापतेर्द्वितीया चितिः । करैरित्याद्यपि पूर्ववत् । कोऽसाविन्द्र इत्येतदाह असौ वै प्रसिद्ध आदित्य इन्द्रः परमेश्वरः सैषोऽग्निः स एष इन्द्रोऽग्निराहवनीयस्तस्येमा इष्टकाः सेतिहासपुराणाश्चत्वारो वेदाः पूर्ववत्क्रमेण शिरःप्रभृत्यवयवात्मना चितेष्टकारूपा ध्येयाः इहापीतिहासपुराणयोरेकत्वं द्रष्टव्यम् । सैषा द्यौर्दिवात्मकोऽयमाहवनीयोऽग्निः प्रजापतेस्तृतीया चितिः । अयं पुनरिन्द्रः सविता दिवाहवनीयाग्निरूपो यजमानस्यात्मविदे,

स शिरःपक्षसीपुच्छस्पृष्ठवानेषोऽग्निः पुरुषविदः सैषा द्यौः प्रजापतेस्तृतीया चितिः करैयजमानस्यात्मविदेऽवदानं करोत्यथात्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत् तत्रानन्दी मोदी भवति ॥ ३३ ॥

पृथिवी गार्हपत्योऽन्तरिक्षं दक्षिणाग्निर्द्यौराहवनीयस्तत एव पवमानपावकशुचय आविष्कृतमेतेनास्य

---

त्रैलोक्यात्मकः प्रजापतिर्यजमानस्यात्मवित् यजमानेन चित्यग्नित्वात्मत्वेन भावितस्तस्मै, अवदानमवदानवत् तत्प्रीतिकरं यजमानं करोति तदात्मसाक्षात्करोतीत्यर्थः । अथ च आत्मविदे, पूर्वोपासकः फलावस्थ आत्मवित् तस्मा आत्मविदे यजमानस्यावदानं करोतीति सम्बन्धः, यजमानं तस्मै समर्पयतीत्यर्थः । अथानन्तरमात्मविद्यजमानमुत्क्षिप्य ब्रह्मणे समष्टिसूत्रात्मने कार्यावस्थाय प्रायच्छत् प्रत्तवान्, तत्र ब्रह्मणि स्थितो यजमान आनन्दी मोदी सामान्यतो विशेषतश्च यथासङ्कल्पमानन्दवान् भवतीत्यर्थः । अस्या ब्रह्मप्राप्तेर्गत्यायत्तत्वाच्चात्र ब्रह्मशब्दः परब्रह्मविषयः । 'कार्यं बादरिरस्य गत्युपपत्तेः' (शा० सू० अ० ४ । पा० ३ । सू० ७) इति न्यायात् ॥ ३३ ॥

पुनः प्रकारान्तरेण गार्हपत्याद्यग्निविषये सम्पाद्यविशेषमुपदिशन्नुपासनान्तरमाह "पृथिवी गार्हपत्यः० विचिनोति" इति । गार्हपत्यादिष्वग्निषु यथानिर्देशं पृथिव्यादिदृष्टिवि-

**यज्ञं यतः पवमानपावकशुचिसङ्घातो हि जाठरस्त-स्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यो यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छति ।**

---

धीयते, तत एवेति त एवेत्येतत्, पवमानपावकशुचयोऽग्नि-विशेषा ये प्रसिद्धास्त एव एव गार्हपत्यः पवमानो दक्षिणाग्निः पावक आहवनीयः शुचिरिति भेदः । अस्य गार्हपत्यादि-सङ्घातस्य सम्बन्धि यज्ञं यजमानमेतेन पवमानादिदेवता-सङ्घातेनाविष्कृतं प्रवर्तितमित्यर्थः । आधानेनाग्निषु संस्कृतेषु प्रथमं पवमानाद्यो हीष्टाः मन्तोऽग्नीनामुत्तरकालकृतां सम्पा-दयन्ति तस्मात् पवमानादिरूपा एते ध्येया इत्यभिप्रायः । तथा जाठरोऽपि योऽग्निः सोऽपि पवमानादिसङ्घात एवेति ध्येयत्वमभिप्रेत्याह, पवमानपावकेति । यस्मादेवमध्यात्ममधि-भूतमधिदैवमधियज्ञञ्चाग्निराहवनीयादिरूपस्तस्मादग्निर्यष्टव्यः पय आदिभिर्हविर्भिः, चेतव्य इष्टकाभिरधियज्ञमध्यात्मञ्च यथा-शास्त्रं, स्तोतव्य उपस्थानादिमन्त्रैः, अभिध्यातव्य आभिमुख्येन प्रत्यगात्मतया ध्यातव्य इत्यग्निप्रशंसया तन्निष्ठता कर्तव्योप-दिष्टा । इदानीं होमकालेऽग्नौ चिन्तनीयं मन्त्रेणोपदेष्टुं तत् प्रसञ्जयति यजमानो हविर्गृहीत्वेति । इच्छति इच्छेत कुर्वीते-त्यर्थः । हिरण्यवर्ण इति मन्त्रः हिरण्यवत्प्रकाशमानः शकुनः पक्षी पक्षीव नीडस्थो नीडादन्यो देहसङ्घातादिलक्षणः हृदि

हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः।
मद्गुर्हंसस्तेजोवृषः सोऽस्मिन्नग्नौ यजामहे ॥

इति चापि मन्त्रार्थं विचिनोति। तत् सवितुर्वरेण्यं भर्गोऽस्याभिध्येयं यो बुद्ध्यन्तस्थो ध्यायीह मनःशान्तिपदमनुसरत्यात्मन्येव धत्तेऽत्रेमे श्लोका भवन्ति।

---

अन्तर्हृदये आदित्ये सवितृमण्डले च प्रतिष्ठितो वर्तते। केन केन रूपेणेत्यपेक्षायामाह, मद्गुः जलचरः पक्षी, स यथा जले निमग्न इव गच्छति तथा हृद्यात्मा जीवरूपः सम्पूर्णोऽपि यथावदनवभासनान्मद्गुसदृशः। हंसो मानससरोऽम्भोरुहवनविहारी पक्षिविशेषः, स यथा शुद्धस्तथा आदित्ये पुरुषो ब्रह्मरूपो यतः स तेतोवृषस्तेजसा श्रेष्ठस्तेजोबहुल इत्यर्थः। तमेव पुरुषमुभयत्र वर्तमानमित्यध्याहारः, अस्मिन्नग्नौ यथोपदिष्टस्वरूपे यजामहे वयं पूजयाम इति मन्त्रस्यार्थः। इतिशब्दो मन्त्रसमाप्त्यर्थः। इति च मन्त्रमुच्चार्य अपि, मन्त्रार्थमपीति योजना, विचिनोति विचारयति चिन्तयतीत्यर्थो धातूनामनेकार्थत्वात्, यद्वा विचिनोति विशेषेण मन्त्रतात्पर्यसम्बन्धतया चिनोति सङ्घट्टयतीत्यर्थः। तमेव तात्पर्यमुपन्यस्यति "तत् सवितुः ० भवन्ति" इति। सवितुरादित्यस्य सम्बन्धि तत् स्वरूपं वरेण्यं वरणीयं सम्भजनीयं, कीदृशं तत् भर्गः 'भाभिर्गतिरस्य हि' इत्यादिना (खं० ७) पूर्वत्र व्याख्यातरूप, अस्य यजमानस्या-

यथा निरिन्धनो वह्निः स्वयोना उपशाम्यते।
तथा वृत्तिक्षयाच्चित्तं स्वयोना उपशाम्यते॥
स्वयोना उपशान्तस्य मनसः सत्यकामतः।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः॥
चित्तमेव हि संसारं तत्प्रयत्नेन शोधयेत्।
यच्चित्तस्तन्मयो भवति गुह्यमेतत् सनातनं॥

---

भिध्येयं, यो बुद्ध्यन्तस्थो ध्यायी ध्याता हृदि प्रतिष्ठितो ध्यातेति चिन्तयेदित्यर्थः। एवं कुर्वन्निह मनःशान्तिपदं मनसो विक्षेपपरित्यागेन शान्तिपदमालम्बनमनुसरति प्राप्नोति यत्र आत्मन्येव प्रतीति ध्येयं रूपं धत्ते अनुसन्धत्ते इत्यर्थः। अत्रोक्तेऽस्मिन्नर्थे इमे वक्ष्यमाणाः श्लोका भवन्ति। "यथा निरिन्धनो० उपशाम्यते"। स्वयोनौ भूतसूक्ष्मलक्षणे स्वकारणे, तथा चित्तं स्वयोनौ स्वाधिष्ठाने साभासाज्ञानोपलक्षिते उपशाम्यते शाम्यतीत्यर्थः। "स्वयोनौ ० कर्मवशानुगाः"। इन्द्रियार्थविमूढस्य मनसः कर्मवशानुगा अनृता मिथ्याप्रवृत्तयो यास्ताः सत्यकामतो यथार्थात्मवस्तुन्युपरागात् स्वयोनावुपशान्तस्य पुनर्न प्रभवन्तीत्यध्याहारेण योजना। यस्मादेवं तस्मात् "चित्तमेव ० सनातनं"। संसरत्यनेन पुमानिति वा संसरति पुरुषमभिभूय प्रवर्तत इति वा चित्तमेव संसारं, तत्संसर्गं विना पुरुषस्य संसारादर्शनादित्यर्थः। तत्प्रयत्नेन शास्त्रोक्तशुभविषयनिवेशनं कृत्वा शोधयेन्निवृत्ताशुभवासनं सम्पादयेत्। यतो यच्चित्तो

चित्तस्य हि प्रसादेन हन्ति कर्म्म शुभाशुभं ।
प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते ॥
समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात् तत् को न मुच्येत बन्धनात् ॥
मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च ।
अशुद्धं कामसम्पर्कात् शुद्धं कामविवर्जितं ॥
लयविक्षेपरहितं मनः कृत्वा सुनिश्चलं ।
यदा यात्यमनीभावं तदा तत् परमं पदं ॥
तावन्मनो निरोद्धव्यं हृदि यावत् क्षयं गतं* ।
एतज्ज्ञानञ्च मोक्षञ्च शेषान्ये ग्रन्थविस्ताराः ॥

यस्मिन्निवेशितचित्तः पुरुषः स तन्मयस्तत्स्वभावो भवतीत्येत-द्रुह्य प्राकृतबुद्ध्यगम्य सनातनमव्यभिचारीत्यर्थः। "चित्तस्य० अव्ययमश्नुते"। प्रसन्नात्मा प्रसन्नचित्तः, आत्मनि प्रत्यक्-स्वरूपे। सुगममन्यत्। "समासक्तं ० बन्धनात्"। स्पष्टार्थः। "मनो हि ० विवर्जितं"। तस्मात् कामस्त्याज्य इत्यर्थः। "लय-विक्षेपरहितं ० परमं पदं" लयो निद्रा, विक्षेपो बहिर्विषय-स्मृत्यादिः। अमनीभावः आत्मनो मनउपाधिप्रवेशकृतवि-शेषपरित्यागः, तं यदा याति तदा तदेव निरुपाधिकस्वरूपं परमं पदं याति। न पुनरप्राप्तप्राप्तिरस्येत्यर्थः। "तावन्मनो०

* गतन्क्षयमिति व्याख्यानुसारी पाठः।

समाधिनिर्धौतमलस्य चेतसो
निवेशितस्यात्मनि यत् सुखं भवेत्।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते॥
अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत्।
एवमन्तर्गतं यस्य मनः स परिमुच्यते॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासङ्गि मोक्षो निर्विषयं स्मृतं॥ इति।

---

ग्रन्थविस्तराः"। हृदि हृदयसाक्षिणि। गतः प्राप्तः क्षयो विनाशो येन तत् तथा। उत्तरार्द्धं स्पष्टार्थं। "समाधि ० करणेन गृह्यते"। आत्मनि निवेशितस्य सत इत्यर्थः। अन्तःकरणेनान्तःकरणावस्थासाक्षिणा गृह्यते स्वानुभवमात्रसिद्धं तन्नान्यस्मै वक्तुं शक्यमित्यर्थः। "अपामापो ० परिमुच्यते" यथेत्यध्याहारः, अपामिति षष्ठी सप्तमीत्वेन विपरिणेया, प्रथमाश्च द्वितीयात्वेन। तथा चाप्सु यथा निक्षिप्ता अपः पृथङ् न लक्षयेत् कश्चिदग्नौ वाग्निं व्योम्नि वा प्रविष्टं घटाकाशादि, एवं यस्य मनोऽन्तर्गतमात्मैकतां गतं स परिमुच्यते सर्वसंसारबन्धनादित्यर्थः। किं बहुना मनःकृतः संसारस्तद्विलयनाच्च मोक्ष इति निश्चित्य तन्निरोधे यत्नः कार्य इत्यभिप्रेत्योपसंहरति "मन एव ० स्मृतमिति" इति। स्पष्टार्थः। मनोनिरो-

अतोऽनग्निहोत्र्यनग्निचिदज्ञानभिध्यायिनां ब्रह्मणः पदव्योमानुस्मरणं विरुद्धं तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः ॥ ३४ ॥

नमोऽग्नये पृथिवीक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि नमो वायवेऽन्तरिक्षक्षिते लोकस्मृते

---

धस्य चोपायं व्यतिरेकोक्तिपूर्वकं विदधती प्रकृतमुपसंहरति "अतोऽनग्निहोत्रि ० अभिध्यातव्यः" इति । अतो यस्मादनग्निहोत्रिणां यथोक्तविधाग्निहोत्रहीनानां, अनग्निचितां पञ्चेष्टक इत्याद्युक्तप्रकाराग्निचयनमकुर्वतां, अज्ञानां चित्तवृत्तान्तं संसारमोचहेतुमजानतां, अनभिध्यायिनां पूर्वोक्तसवितृमण्डलस्थात्माभिध्यानरहितानां पुंसां ब्रह्मणः पदमात्मतत्त्वं तदेव व्योम व्योमवन्निराकारत्वात्, तस्यानुस्मरणमनुसन्धानं विरुद्धं विशेषेण रुद्धं, चित्ताशुद्धिचयाभावात् ब्रह्मानुसन्धानमशक्यमित्यर्थः । तस्मादित्यादि व्याख्यातम् ॥ ३४ ॥

इदानीं पूर्वोक्ताग्निहोत्रमग्निचयनञ्चानुतिष्ठतो ध्यायिनः स्तोतव्य इत्युक्तमग्न्यादित्योपस्थानं कैर्मन्त्रैः कार्यमित्यपेक्षायां तान् मन्त्रान् पठति "नमोऽग्नये ० सर्वमस्मै यजमानाय धेहि" । एतेऽग्न्युपस्थानमन्त्रा गार्हपत्यादिक्रमेण त्रयो योज्यास्चतुर्थस्तु सर्वाग्निसाधारणोऽन्ते सकृत् प्रयोज्यः । पृथिवीक्षिते पृथिवीलोकनिवासाय, लोकस्मृते पृथिवीलोकस्य स्मर्त्रे यजमानार्थं

लोकमस्मै यजमानाय धेहि नम आदित्याय दिवि-
क्षिते लोकस्पृते लोकमस्मै यजमानाय धेहि नमो
ब्रह्मणे सर्वक्षिते सर्वस्पृते सर्वमस्मै यजमानाय धेहि।
हिरण्मयेन पात्रेण सत्यस्याभिहितं मुखम्।
तत् त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ॥
योऽसा आदित्ये पुरुषः सोऽसा अहं। एष ह वै

---

चिन्तयतेऽग्नये गार्हपत्यात्मने नमः प्रह्वीभावोऽस्तु, अस्मै यजमानाय मह्यं लोकं पृथिवीलोकं धेहि मदर्थं धारयाहमुत्तरकाले त्वदात्मा सन्निमं लोकं प्राप्स्यामीत्यर्थः। एवमेवोत्तरे मन्त्रा योज्याः। आदित्योपस्थानमन्त्रान् पठति "हिरण्मयेन ‘ असा अहं" इति। हिरण्मयेन ज्योतिर्मयेन पात्रेण मण्डलरूपेणामत्रेण सत्यस्य सत्यात्मनो ब्रह्मणो मुखं प्राप्तिद्वारमभिहितमपि हितमाच्छादितं वर्तते, हे पूषन् श्रीसूर्य त्वं तदपावृणु तद्द्वारमुद्घाटय, किमर्थं सत्यधर्माय, किं लक्षणाय विष्णवे व्यापनशीलाय। व्याख्यास्यमानसत्यधर्मविष्णुस्वरूपप्राप्तय इत्यर्थः। योऽसौ परोक्ष आदित्ये मण्डलोपलक्षिते देवतात्मनि पुरुषः पूर्णोऽन्तर्यामी सोऽसौ स एवाहं, नाहं तस्मादन्य इत्यर्थः। यद्वेत्थ योजना, य आत्मनि पुरुषोऽसावादित्ये पुरुष आत्मा अस्यासौ आदित्ये पुरुषः सोऽहमात्मनि पुरुषः, अतोऽन्तःकरणोपलक्षितस्यादित्यदेवतोपलक्षितस्य चाव-

सत्यधर्मो यदादित्यस्यादित्यत्वं तच्छुक्लं पुरुषमलिङ्गं नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्य इवेत्यक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्ग एतत् सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य

---

योर्न भेदोऽस्तीत्यर्थः, इतिशब्द उपस्थानमन्त्रसमाप्त्यर्थः। सत्यधर्मपदस्यार्थमाह "एष ह वै ० उदाहरन्ति" इति। एष ह एव वै प्रसिद्धः, सत्यधर्मः, कः आदित्यस्यादित्यत्वमिति यत् एष हीति योजना, आदाय यातीत्यादित्यः, तथा च श्रुत्यन्तरे निर्वचनं 'यदिदं सर्वमाददाना यन्ति तस्मादादित्याः' (वृहदा० अ० ५) इति। तथा च भौमानां रसानामुत्तरायणे आदानं ग्रहणं कुर्वन् दक्षिणायने वृष्टिरूपेण तान् रसान् आ समन्तादददच्च परिभ्रमन् यदादित्यशब्देन निरुच्यते एतदेव सत्यधर्मत्वमेष आदित्य एव सत्यधर्म इत्यर्थः। तदादित्यात्मत्वं शुक्लं शुद्धं भास्वरमिति वा, पुरुषं पुरुषाकार 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' (छान्दो० अ० १) इति श्रुतेः। अलिङ्गं स्वतोलिङ्गवर्जितं स्त्रीपुन्नपुंसकादिभेदरहितं 'नैव स्त्री न पुमानेष न चैवायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स युज्यते' (श्वे० अ० ५) इति श्रुतेः। इदानीं विष्णुत्वमस्योपपादयति, नभस इत्यादिना। नभसोऽन्तर्गतस्य दिङ्मण्डलव्यापिनस्तेजसः प्रकाशस्यांशमात्रं लेशमात्रमेतद्यदादित्यस्य मध्य इवादित्यमण्डलस्थमिव न तु तत् तत्रैव

**मध्ये अमृतं यस्य हि सोमः प्राणा वा अप्यथ-ङ्कुरा एतद्ब्रह्मैतदमृतमेतद्भर्ग एतत् सत्यधर्मो नभसो ऽन्तर्गतस्य तेजसोऽंशमात्रमेतद्यदादित्यस्य मध्ये यजु-**

---

वर्त्तते किन्तु सर्वव्यापीत्यर्थः, इति एवम्प्रकारेण अर्चिषि सर्व-प्राणिचक्षुर्देशे अग्नौ च प्रसिद्धेऽस्यैव तेजसोऽशमात्रमित्यर्थः। किं तत्तेजः, एतद्ब्रह्म परिपूर्णं, अत एवैतदमृतमनागमापायि नित्यमिति यावत्। एतदेव भर्गः सर्वकारणत्वादिरूपं पूर्वं व्याख्यातम्। तेजस्तेजस्विनामहमिति भगवद्वचनात् सर्वत्रव्यापि तेजोरूपं ब्रह्मामृतं विष्णुरित्युक्तं भवति। इदानीमुक्तमेव स्वरूपमनूद्य तस्य सर्वात्मत्वमाविष्कुर्वती ध्येयविशेषमर्यादुपदि-शति, एतत् सत्यधर्म इत्यादिना। किं तत्सत्यधर्मपदाभिधेयं तदाह, यदादित्यस्य मध्ये अमृतमिति। किं तदमृतं तदाह, यस्येति। सोमश्चन्द्रमाः, प्राणाः प्राणिनां जीवनाख्याः प्राणादि-वृत्तयः, वाशब्दात् प्राणस्थित्यर्थमन्नं गृह्यते, एते सर्वेऽप्यमृत-रूपाः पदार्था यस्याङ्कुराः कार्याणि अमृताङ्कुरकारणत्वाद-मृतमित्यर्थः। अप्ययङ्कुरा इति यकारः प्रमादपतितः। एत-द्ब्रह्मेत्याद्युक्तार्थम्। अमृतात्मत्वमुपपाद्यास्य पुनरपि यजुरात्म-त्वमाहैतत् सत्यधर्म इति। यदादित्यस्य मध्ये यजुर्दीप्यति दीप्यते, किं तद्यजुरिति तदाहोमाप इति। ॐकारोऽनुज्ञाप-नात्, आप्यायनादापः, प्रकाशनाज्ज्योतिः, रसः सर्वकर्मपरि-

**दीप्यत्योमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।**
**अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययं ।**
**द्विधर्मोऽन्धं तेजसेन्धं सर्वं पश्यन् पश्यति ॥**

पाकनिर्वृत्तत्वाद्वादित्यस्य रसत्वं सर्वकर्मफलाश्रय इत्यर्थः, अमृतं देवानां मोदनहेतुत्वात्, ब्रह्म भूर्भुवःस्वरोमिति त्रैलोक्यमोङ्कारार्थभूतमोङ्कारश्च सर्वमेतदेवेत्यर्थः। एतत् सर्वं छान्दोग्ये 'असौ वा आदित्यो देवमधु' इत्यत्र मधुविद्यायां स्पष्टमाम्नात। अत्रैष श्लोकः अष्टपादमिति। अष्टौ दिशः पादा यस्य सोऽष्टपादस्तं। सविता ह्यन्तरिक्षस्थः पादैरिव दिग्भिः प्रतितिष्ठतीव विभाव्यते। यद्वा 'आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमा विभासः कश्यपोऽष्टमः स महामेरुं न जहाति' इति तैत्तिरीयारण्यकोक्ता आरोगादयोऽष्टौ पादा ज्ञेयाः। शुचि शुद्धमलेपकमित्येतत्। हंसं हन्ति गच्छतीति हंसः, परिभ्रमन्तमिति यावत्। अथ वा हंस इति सूर्यनाम 'हंसः शुचिषत्' इति, 'असौ वा आदित्यो हंसः शुचिषत्' इति ब्राह्मणदर्शनात्। त्रिसूत्रं त्रीणि सूत्राणि सूचकानि बन्धनानि वा यस्य स त्रिसूत्रस्तं, ऋग्यजुःसामभिर्हि प्रतिपाद्यते सविता त्रय्यात्मकमण्डलनिबद्धश्च। तथा च श्रुतिः 'सैषा त्रय्येव विद्या तपति' इति। अणुं सूक्ष्ममिन्द्रियागोचरं। अव्ययं शाश्वतं। द्विधर्मोऽन्धं द्वाभ्यां पुण्यपापाभ्यामन्धमनवभासमानं पुण्यपापरहितमित्यर्थः। धर्मोऽन्धमिति छान्दसः। तेजसेन्धं तेज-

नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतदादित्यस्य मध्ये उद्रुत्वा मयूखे भवत एतत् सवित् सत्यधर्म एतद्यजुरेतत् तप एतदग्निरेतद्वायुरेतत् प्राण एतदाप एतच्चन्द्रमा एतच्छुक्रमेतदमृतमेतद्ब्रह्मविषयमेतद्भानु-

---

सेद्धं दीप्तमतितेजस्विनमित्यर्थः। एवंविधमीश्वरं सवितारं पश्यन् सर्वं पश्यति तदात्मभावनां कुर्वन् सर्वज्ञो भवतीत्यर्थः। किं बहुनाऽयमेव सर्वात्मको नातःपरमस्तीति तं महीकर्तुं पुनरुपादत्ते नभसोऽन्तर्गतस्येति। किं तद्यदादित्यस्य मध्ये उदित्वोद्गम्य मयूखे अंशू भवतः प्रभवतः समर्थौ भवतः, जगत् प्रकाशयितुमित्यर्थः : द्विवचनं प्राधान्याभिप्रायं। उद्रुत्वा मयूखे इति पाठे उत् उत्वा उद्गम्य मयूखे उत्प्रभवत इत्यन्वयः। उदयाचलमारूढे सवितरि ततः प्रथमं निर्गते मयूखे मण्डलमतिक्रम्य ब्रह्माण्डमण्डलमखिलमवभासयती उच्चैः प्रसर्पत इत्यर्थः। यदेतन्मयूखद्वय प्राधान्येनोक्तमेतत् सवित् सवितृरूप, सत्यधर्मः मयूखोपलक्षितं सवितृस्वरूपं सत्यधर्म इत्यर्थः। एतद्यजुरित्याद्यस्य महिमोपन्यासः स्पष्टार्थः। एतद् ब्रह्मविषयमिति ब्रह्म विषयो यस्मिन् तत् तथा ब्रह्मप्राप्तिद्वारमित्यर्थः। एतद्भानुरर्णव इत्येकं पदं तेजोराशिरित्यर्थः। यद्वा भानुः प्रकाशस्वभावोऽर्णवोऽर्ण उदक वहति प्रापयति वृष्टिद्वारेणेत्यर्णव इत्यर्थः। तस्मिन्नर्णव एव यजमानाः कर्मि-

**रर्णवस्तस्मिन्नेव यजमानाः सैन्धव इव व्लीयन्त एषा वै ब्रह्मैकताच हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति। अंशुधारय इवाणुवातेरितः संस्फुरत्यसावन्तर्गः सुराणां। यो हैवंवित् स सवित् स द्वैतवित्**

र्णान्तदविरोधेनोपासकाश्च, सैन्धव इव सैन्धवखिल्य इवोदके निक्षिप्तः, लीयन्ते विलीयन्ते तदात्मतां गच्छन्तीत्यर्थः। यदेव मस्मिन् यजमानानां विलयनमेषा वै एषैव ब्रह्मैकता कार्यब्रह्मसायुज्यप्राप्तिरेवोपासनाफलं न परब्रह्मसायुज्यमित्यभिप्रायः। तत्र हेतुश्च हि यस्मात् सर्वे कामाः काम्यमाना विषयाः समाहिताः स्थिताः सन्तीत्यर्थः। कार्यब्रह्मलोके हि सङ्कल्पमात्रसिद्धाः पित्रादिलक्षणाः कामाः श्रूयन्ते 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते' (छान्दो० अ० ८) इत्यादौ। इतिशब्दो महिमोपवर्णनसमाप्त्यर्थः। अत्रोक्तफले उदाहरन्ति ऋषय इत्यर्थः। "अंशुधारय ० कृष्णवर्त्मनः" इति। असौ सवितारमीशं प्रविष्टो मुक्तो यजमानः सुराणां सर्वेषां देवानामन्तर्गोऽन्तर्गतः संस्फुरति सर्वदेवतात्मा भवति, क इवेत्युच्यते, अणुवातेरितो ऽल्पवायुना प्रेरितोऽंशुधारय इव अंशून् धारयतीत्यंशुधारः, अंशुधार एवांशुधारयः प्रदीपः। धर्ता च विधर्ता च विधारय इतिवत् प्रयोगः। यो हैवंवित् स सवित्, विदा ज्ञानेन सह वर्तत इति सवित् विद्वानित्यर्थः। स द्वैतवित् द्वैतं परापर-

**सैकधामेतः स्यात् तदात्मकश्च । ये बिन्दव इवाभ्युच्चरन्त्यजस्रं विद्युदिवाभ्रार्चिषः परमे व्योमन् । तेऽर्चिषो वै यशस आश्रयवशाज्जटाभिरूपा इव कृष्णवर्त्मनः ॥ ३५ ॥**

---

ब्रह्मभेदं वेत्तीति द्वैतवित् । यद्वा जीवानां द्वैतं भेदतत्त्वं वेत्तीति द्वैतवित् । स विद्वानेकधाम एकं मुख्यं धाम इतः प्राप्तः स्यात् भवेत् । यस्य धाम प्राप्नोति तदात्मकश्च तत्स्वरूपश्च भवेत् ब्रह्मैव क्रमेण स भवतीत्यर्थः । द्वैतवित्त्वं प्रपञ्चयति, ये बिन्दव इवेति । ये महासमुद्राद्बिन्दव इव वायूद्धूताः परमात्मनः सकाशादविद्याकार्योद्भूता अजस्रं पुनः पुनर्जागरितादावभ्युच्चरन्ति पृथगुत्तिष्ठन्ति, तेऽर्चिषो वै इत्युत्तरेणान्वयः । पृथग्भावावभाससमाचांशे दृष्टान्तमुक्त्वा पृथग्भूतस्यैव सतः पृथक्परिच्छेदप्रतिभासे दृष्टान्तमाह, विद्युदिवाभ्रार्चिषः परमे व्योमन् इति । परमे व्योम्नि महाकाशे यथाऽभ्रार्चिषोऽभ्रान्तर्गतस्याखण्डस्यार्चिषो विद्युद् विद्युदाकारावभासः, तथा ते जीवात्मानो यशसः परमात्मनः, 'तस्य नाम महद्यशः' इति श्रुतेर्यशः परमात्मा, तस्य यदर्चिस्तैतन्यप्रकाशस्तस्य वै आश्रयवशाच्चैतन्याभासखचितत्वात् तत्प्रतिबिम्बाधारत्वाद्वा अविद्याकार्यदेहद्वयरूपा विविक्ता जीवा इति व्यपदिश्यन्त इति योज्यं । यथा कृष्णवर्त्मनोऽग्नेरभिरूपा जटा ज्वाला स्फुलिङ्गाः प्रकाशाश्रय-

द्वे वाव खल्वेते ब्रह्मज्योतिषो रूपके शान्तमेकं समृद्धञ्चैकमथ यच्छान्तं तस्याधारं खमथ यत् समृद्धमिदं तस्यान्नं तस्मान्मन्त्रौषधाज्यामिषपुरोडाशस्थालीपाकादिभिर्यष्टव्यमन्तर्वेद्यामास्न्यवसृष्टैरन्नपानैश्चा-

त्वादनेकाग्निलमापद्यन्ते स्फुलिङ्गादिव्यपदेशभेदञ्च तथेत्यर्थः ॥ ॥ ३५ ॥

जीवद्वैततत्त्वमेवमाविष्कृत्य जीवेश्वरद्वैतमाविष्करोति "द्वे वाव० अत्रोदाहरन्ति" इति। ब्रह्मज्योतिषो ब्रह्मात्मकस्य चित्प्रकाशस्य द्वे वाव खलु रूपके ज्ञापके, एकं शान्तं समृद्धं चेकं। ते एवाश्रयभेदनिर्देशेन विभजते। अथ तयोर्मध्ये यच्छान्तं तस्य खमाकाशं आधारमाश्रयः, क्लैव्यं छान्दसं, खे व्याप्य व्यवस्थितोऽखण्डप्रकाशः। शान्तं रूपकमीश्वरस्याभोक्तुः स्वरूपज्ञापकमित्यर्थः। अथ यत् समृद्धं तस्येदमन्नमाधार इत्यनुवर्तते, अन्ने भोक्तृत्वेन व्यवस्थितं ब्रह्मज्योतिस्तस्य जीवत्वज्ञापकं, भोक्ता जीव इत्यर्थः। तथा च मन्त्रः 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (ऋग्० मं० १। सू० १६४) इति। विभागनिर्देशप्रयोजनमाह, तस्मादिति। यस्मादेवं ब्रह्मैव जीवेश्वररूपेण विभक्तं वर्तते तस्मान्मन्त्रौषधाज्यादिभिर्मन्त्रोपबृंहितैरोषधादिभिर्हविर्भिरन्तर्वेद्यां त्रेताविहितायां गृह्योक्तायामपि स्थण्डिलादि-

* यत् शान्तमिति लिखितपुस्तके पाठः।

**स्यमाहवनीयमिति मत्वा तेजसः समृद्ध्यै पुण्यलोक-विजित्यर्थायामृतत्वाय चात्रोदाहरन्ति। अग्निहोत्रं जुहुयात् स्वर्गकामो यमराज्यमग्निष्टोमेनाभिजयति***

रूपायां यष्टव्यमीश्वरात्मकब्रह्मयजनं कर्तव्यमित्यर्थः। औषध चरुधानादि, आमिष पश्वङ्गावदानं, पुरोडाशो मन्त्रसंस्तुतः पिष्टपाकविशेषः। स्थालीपाकः स्मार्तश्चरुः। आदिशब्दात् पयःसोमादि गृह्यते। तथा जीवरूपब्रह्मयजनमपि कार्य-मित्यभिप्रेत्याह, आस्यवशिष्टैरिति। अवशिष्टैरन्नपानैश्च महाय-ज्ञाद्यवशिष्टैः स्वभोजनत्वेन पश्वादिहितैरिति वाऽन्नपानैरात्मनि आस्ये यष्टव्यमिति पूर्वेणान्वयः। यस्मिन्नास्येऽन्नपानाभ्यां जीव-रूपब्रह्मयजनं क्रियते तदास्यमाहवनीयं मत्वा आस्यात्मके ऽस्मिन्नाहवनीयेऽग्नौ प्रत्यगूपाय वैश्वानरात्मने हविरिदं हूयते मयेति चिन्तयन् भुञ्जीतेत्यर्थः। किमर्थमेवं कार्यमिति तत्राह, तेजस इति। तेजो ज्ञानबलादिनिमित्तं प्रागल्भ्यं, तद्वृद्ध्यर्थ-मास्याहवनीये यजनं, पुण्यलोकस्य स्वर्गादेर्विजितिर्विजयस्तद-र्थाय तत्प्रयोजनाय श्रौतस्मार्तयजनं कार्यमित्यर्थः। एतदेव श्रौतादिकर्म सकामस्य पुण्यलोकजयहेतुरपि निष्कामस्य मोक्ष-हेतुर्भवति, अतो मुमुक्षुभिरपि यष्टव्यमित्यभिप्रेत्याह, अमृतत्वाय चेति। कुतः प्रमाणात्। पुण्यलोकसाधनं कर्मेत्यवगतमित्यत आह, अत्रोदाहरन्तीति। विधिवाक्यानि श्रूयन्त इत्यर्थः।

* अभियजतीति मूले लिखितं।

**सोमराज्यमुक्थेन सूर्यराज्यं षोडशिना स्वाराज्यमतिरात्रेण प्राजापत्यमासहस्रसंवत्सरान्तक्रतुनेति ।**

**वर्त्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ।**
**अन्तर्याण्डोपयोगादिमौ स्थितावात्मशुची तथा ॥३६॥**

तान्येव वाक्यानि पठति "अग्निहोत्रं ० क्रतुनेति" इति । अत्राग्निहोत्रादिशब्दा. कर्मनामधेयानि । अग्निहोत्रग्रहणञ्च सर्वहविर्यज्ञानामुपलक्षणं । अग्निष्टोमः सर्वसोमयागानां प्रथमो यज्ञः 'एष वै प्रथमो यज्ञो यज्ञानां यदग्निष्टोमः' इति श्रुतेः । यमराज्यं यमाधिष्ठितः स्वर्गविशेषः । एवमेव सोमराज्यमित्यादि योज्यं । स्वाराज्यमिन्द्राधिष्ठितो लोकविशेषः । एतच्चात्यग्निष्टोमवाजपेयाप्तोर्यामाणां बृहस्पतिसवादीनामेकाहाना मुपलक्षणं । प्राजापत्य प्रजापतिनाधिष्ठितं स्थानं, तत् द्वादशरात्रप्रभृतिसहस्रसंवत्सरसंज्ञान्तो यः क्रतुसमुदायः सत्रात्मकस्तेन जयतीत्यर्थः । एतेनाहीना अप्युक्ता वेदितव्याः । "वर्त्त्याधार ० आत्मशुची तथा" इति । पूर्वार्धः स्पष्टार्थः । अन्तरे भवमन्तर्यमन्तरीयं ब्रह्माण्डान्तर्वर्ति व्यष्टिशरीरं अण्ड ब्रह्माण्डञ्च अन्तरीयाण्डे, तयोरुपयोगात् स्त्रीकारादिमौ आत्मा च शुचिश्चात्मशुची पुरुषादित्यौ तथा स्थितौ । वर्त्त्याधारस्नेहसमाप्तिपर्यन्त दीपस्थितिवत् पिण्डब्रह्माण्डगतवासनाक्षयपर्यन्तं पुरुषादित्यरूपेण ब्रह्मज्योतिषो भेदेनावस्थानं भवतीत्यर्थः ॥ ३६ ॥

**तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजस्तत् त्रेधाभिहितमग्नावादित्ये प्राणेऽथैषा नाड्यन्नबहुमित्येषाग्नौ हुतमादित्यं गमयत्यतो यो रसोऽस्रवत् स उद्गीथं वर्षति तेनेमे प्राणाः प्राणेभ्यः प्रजा इत्यत्रोदाहरन्ति यद्धविरग्नौ हूयते तदादित्यं गमयति तत्**

---

इदानीं यथोक्तानि कर्माणि प्रणवोपबृंहितान्यनुष्ठेयानि कर्मसाद्गुण्यायेति विधानपूर्वकं तादृगनुष्ठितकर्ममाहात्म्य प्रपञ्चयति "तस्मादोम् ० प्रजाः" इति। यस्मादुक्तानि कर्माण्यभीष्टफलदानि तस्मात् तेषां वीर्यवत्तरत्वायोमित्यनेन मन्त्रेण आदावुच्चारितेनैतत् कर्मजातमुपासीत तात्पर्येणानुतिष्ठेदित्यर्थः। तथा चाह भगवान्,

'तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनां'॥ इति।

यतोऽपरिमितं तेजोऽस्येति शेषः। अस्योङ्कारस्य तेजः प्रभावोऽनवधीत्यर्थः। ब्रह्मरूपत्वात् तस्येति भावः। तत् तेजस्त्रेधाऽभिहितं अभितो हितं निहितं कथितमिति वा। अग्नौ होमाद्याधारतया कर्मनिर्वर्तके, आदित्ये देवतात्मनि, प्राणे च कर्मफलभोक्तरि यजमाने चेति त्रेधा विहितमित्यर्थः। एतत्कथनोपयोगमाहाऽथैषेति। अथैवं सति एषा शास्त्रसिद्धा नाडी द्वाररूपा अन्नं बहुलयतीत्यन्नबहुः, प्रथमार्थे द्वितीया, इत्येवंविधैषा

BIBLIOTHECA INDICA

WORK NO. 42

---

# MAITRI OR MAITRĀYAṆĪYA UPANISHAD

## TEXT WITH COMMENTARY AND ENGLISH TRANSLATION OF TEXT

# मैत्र्युपनिषत् ।

# THE MAITRI

OR

# MAITRĀYANĪYA UPANISHAD

WITH THE

## COMMENTARY OF RĀMATĪRTHA

EDITED WITH AN ENGLISH TRANSLATION BY

E. B. COWELL, M.A.,

*Professor of Sanskrit in the University of Cambridge*

*RE-ISSUE*

PRINTED AT THE BAPTIST MISSION PRESS

PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL

CALCUTTA

1935

# मैत्र्युपनिषत्

श्रीरामतीर्थकृतदीपिकासहिता ।



आस्यातिकसमाजस्यानुज्ञया तद्व्ययेन च ।

इ, बि, कौएलनाम्नेयं साहेबेन विशोधिता ॥

कलिकाता नगर्यां

ब्याप्टिष्ट मिशन् यन्त्रे मुद्रिता ।

शकाब्दाः १८५७

ई० १८३५ ।

# NOTE.

The Maitri Upanishad as edited and translated by Prof Cowell in the *Bibliotheca Indica* appears to have been published in three fascicles in the years 1862, 1863 and 1870 The edition has been long out of print, and towards 1913 the issue of a second edition was undertaken by MM Satis Chandra Vidyābhūsana, the then Philological Secretary to the Asiatic Society of Bengal. The first fascicle of this reprint was published in 1913 and the second in 1919. Then the death of MM. Satis Chandra Vidyābhūṣana in 1920 intervened and for the time being further progress lapsed. A few years ago the work was taken up again with a view to a speedy completion. MM. Kamalakrṣna Smrtitīrtha was entrusted with the reprint of the remaining portion of the Sanskrit text whilst the undersigned began the reprint of the English translation. During the progress of the work MM. Kamalakrsna Smrtitīrtha died also. The entire remaining work was then placed in the hands of Dr. B. Ch. Chhabra, who has now terminated the work.

There is some obscurity as to the dates of issue of the first edition. A few copies of what appears to be the *third* fascicle exist in paper covers differently belonging to fascicle I 1862, and fascicle II, 1863, whereas there are also copies of the whole work complete with the date 1870. Presumably, the first edition was actually published in three fascicles as indicated above in 1862, 1863 and 1870, of which a certain number of copies may have been put together and issued as a complete volume with a separate title page, and perhaps with a separate serial number, but no reliable copies of the separate fascicles of this old edition survive in the Society's archives to give certainty. Old surplus covers of the first two fascicles may have been used for the third fascicle.

The title pages of the reprints of the first two fascicles by MM. Satis Chandra Vidyābhūsana state that the second edition

has been "revised" by him. This indication rather signifies "reprinted under the supervision or care of", a "revision" of the proofs but not of the text. Independent revision on the basis of new manuscripts was apparently not undertaken. Consequently the title of the new edition describes it as a re-issue which represents the ascertained facts more accurately.

For the benefit of such students as are not concerned with the Sanskrit text, a separate edition has been prepared of the English translation alone which has been issued as number 1521 of this series.

CALCUTTA,
1, PARK STREET,
*March*, 1935.

JOHAN VAN MANEN,
*General Secretary,*
*Asiatic Society of Bengal.*

# PREFACE.

THE Maitri or Maitrāyaṇīya Upanishad belongs to the Maitrāyaṇīya Śākhā of the Black Yajur Veda It appears to have originally formed a part of a lost Brāhmaṇa belonging to that Śākhā, just as the Bṛihad Āraṇyaka comes at the end of the Satapatha Brāhmaṇa. The preceding karma kāṇḍa, according to the Commentator, consisted of four parts which described the various ceremonial rites: and the Upanishad was the fitting conclusion by which the initiated devotee is led from ceremonial to spiritual worship.

Its main subject is a dialogue said to have been held between King Bṛihadratha and the sage Śākāyanya, who relates the divine science of Brahman as it had been delivered to him by the sage Maitri or Maitreya, the son of Mitrā. In the sequel of the discourse he relates a dialogue held in olden time between the deities called the Vālakhilyas and the Prajāpati Kratu. This inserted dialogue would seem to have originally ended with the fourth chapter, but in the present recension it is continued to the 29th section of the sixth chapter. Maitri's own discourse ends in the 30th section of the same chapter; but the Upanishad itself continues the subject in a very similar manner to the end of the seventh chapter. We learn from the Commentator that the sixth and seventh chapters were considered to be *Khila* or supplementary; and he warns his reader not to expect the same strict connection between their various sections, which had been found in the earlier chapters. Even the earlier portion of the Upanishad must be assigned to a late period; and the latter portion must be comparatively modern, as we may judge from the Vaishnava quotations which are sometimes introduced (as *e.g.* vi. 13, 23)

The proper title of the Upanishad is doubtful. The two MSS., which I used in Calcutta for this edition, do not give the original text separately from the commentary, but insert it in detached portions which were carefully distinguished by red pigment; and consequently they have no separate colophon for the text: and in the colophons to the Commentary they vary (with M.) between *maitryupanishad-dīpikā* and *maitrīśākhopanishad-dīpikā*. The Poonah MS. (C) calls it the *Maitrāyaṇīya-śākhopanishad*, and similarly Baron von Eckstein's transcript (E.) gives the name in its closing colophon as *Maitrāyaṇīyopanishad*. Vidyāraṇya in his Sarvopanishad-arthānubhūti-prakāśa gives the name as the Maitrāyaṇīyopanishad, and in śll. 55, 150, he speaks of Maitra as the *śākhā-pravartaka*. It is quoted as the Maitreyopanishad in the Sānkhyapravachana-bhāshya, p 46, with a reference apparently to iii 2 and vi. 10 I have doubtingly written the name as the Maitri Upanishad; Professor Weber (Ind Stud. x 233) prefers Maitrī Upanishad.*

The great peculiarity of this Upanishad consists in its frequent reference to older works; thus we find in the earlier portion (ch. i.—v.) seven definite quotations introduced by the formulæ *anyatrāpyuktam* or *ityevam hyāha*; these occur respectively in pp. 31, 32; 46; 48. 49, 53, 55, 56; 59. The first is taken from the Brihad Āraṇyaka Upanishad v. 9, but the others I have not been able to identify. The later portion (chh. vi., vii.) bristles everywhere with these quotations, always introduced by one or other of the same formulæ; but most of them come from unknown sources. I have noticed that the Chhāndogya Up. is quoted in vi. 4., the Katha Up. in vi. 4, vi. 30, vii. 9, the Praśna Up. in vi. 5 and vi. 8 (but not as a direct quotation in the latter); the Taittirīya Up. in vi. 11, 12; the Īśā Up. in vii. 9, the Amrita Vindu Up. in vi. 22, 34 (cf. the transl given in Ind. Stud. ii. 60—62, śl. 1. 2. 4. 5. 17), and

* In the extract from the Muktikā Upanishad, given by Mr. W. Elliot in the B. A. S. Journal, 1851, p. 613, it is written Maitrāyanī and Maitrāyani, but it is placed among the Upanishads of the Sāma Veda.

Manu (iii. 76) in vi. 37. But the great majority of the quotations* remain unidentified.

The Sanskrit text was all printed in India before I left that country; but the publication has been delayed since my return to England in order that the concluding portion might be accompanied by the English translation. The printed text was based on a collation of two MSS. containing the original and commentary.† These were (1.) A., an old and very correct MS. belonging to the library of the Asiatic Society of Bengal and (2.) B., a less correct and modern MS. procured by Professor Griffith from Benares. The two MSS. never differ except in errors of transcription, and must have come from a common source. I subsequently procured from Poonah, through Professor Haug, a copy of a MS. containing the five first books without the Commentary (C.), the variants of which I subjoin in a list of various readings which follows this preface.‡ Since my return to England I have also partially collated the MS. of the text and commentary (M.) which once belonged to Sir W. Jones, and is now in the British Museum. It consists of two volumes (Nos. 14767, 14768), copied in the Śāka year 1715. Śankara's commentary on the Taittirīya Upanishad is bound up with it in the second volume; hence, as Rāmatīrtha's name is nowhere mentioned, Sir W. Jones in a note erroneously attributed the comm. on the present Upanishad to the same

* The śl. quoted in page 185 may be a corrupted version of Chūlikā Up. 1; see Ind. Stud. ix. 11.

† Rāmatīrtha's commentary is full of interest, as he had a thorough acquaintance with the Upanishad literature, but he seems to be a modern writer. An author of the golden age of Hindu commentators would, for instance, hardly have used the form *rājyasthemne* (p. 5, l. 6), as *sthira* is not included in the pṛithwādigana, see Siddh. Kaumudī, i. 703; *stheman* does however occur in the poetical Sankara-vijaya (i. 9), ascribed to Mādhavāchārya.

‡ I may here add that this MS. inserts at the commencement the following formula of benediction (cf. Satap. Brāhm. i. 9. 1. 26, 27). Tachchhamyor āvṛiṇīmahe, gātum yajnāya gātum yajnapataye, daivī swastir astu naḥ, swastir mānushebhyaḥ. Ūrdhwam jigātu bheshajam, śam no astu dvipade, śam chatushpade. Om śāntiḥ śāntiḥ śāntiḥ.

author. Unfortunately it is a very bad MS., full of omissions and errors of transcription, but I have collated all the text and parts of the Commentary, and have found it of some service in several corrupt passages. These variants are also given in the above mentioned list. As I obtained the help of these MSS. too late for my collation,—the former after the printing of the five first chapters, the latter after the printing of the whole work,—I must beg to call particular attention to the subjoined list of errata, where I have corrected several errors into which I had been led in Calcutta by the corrupt text of the only two MSS. then available.

Professor Weber in his Indische Studien, vol. ii., p. 395, mentions a transcript of a MS. of this Upanishad, which he had received from Baron von Eckstein, and gives some extracts from it, which are alluded to in my note to the Sanskrit text, p. 10. He has kindly allowed me the sight of the transcript and I have compared it with my text. It only contains the five first chapters numbered as four, and is unfortunately very inaccurate, having been. as I conjecture, transcribed from a MS. in the Telugu character; and I have therefore only occasionally noticed its various readings in the subjoined list It often omits words and lines, and it also closes ch ii. with the *pratipurushaḥ* of §. 5. and omits all that follows in pp. 25—39.

In one respect however this MS. (E.) is of great interest, as it belongs to a different recension from our other MSS. and in some places its order differs widely from theirs. Thus after iv. 3. there follows as iv. 4.. a passage from vi. 34. (in my edition pp. 177—180) beginning *atreme ślokā bhavanti; yathā nirindhano vahniḥ* &c. (in p. 179. 2, E. has *akshayam* like M., and in p. 179. 10 *śeshās tu granthavistarāḥ*), down to *mokshe (sic) nirvishayam smṛitam iti.* Then follows, as iv. 5, what is given in the printed text as v. 1, 2 (pp. 69—76). (In p. 72, l. 3, and p. 73, ll. 1, 2, 3, it reads *prajāpatis tasya proktā agryās tanavo Brahmā Rudro Vishṇur iti; eva yo ha khalu vāvāsya rājaso 'nśo 'sau sa yo 'yam Rudro, 'tha yo ha khalu vāvāsya sāttwiko,* &c., which is a curious interpolation, as it refers to the passage in

iv. 5, 6, which this MS. entirely omits.) It is very remarkable that Vidyāraṇya in his Anubhūtiprakāśa adopts the same order; thus iv. 3 ends in śl. 129, and śl 130, 131, 132 give the substance of vi. 34, while the remaining ślokas, 133—147, give v. 1, 2.

Anquetil du Perron gives a translation of this Upanishad in vol. i., pp. 294—374 (*Oupnekhat Maitri*); his version generally seems to follow the text as printed in this edition, but it sometimes apparently incorporates passages from a commentary or additions by the Persian translator.

The text of the tenth adhyāya of Vidyāraṇya's Anubhūtiprakāśa, which I have printed after the Upanishad, is edited from the two MSS. in the Sanskrit College Library of Calcutta. Vidyāraṇya nowhere recognises the sixth or seventh chapters except where he analyses the lines from vi. 34, as mentioned above.

*Cambridge, Nov.* 25, 1869.

सूर्यो रश्मिभिर्वर्षति तेनान्नं भवत्यन्नाद्भूतानामुत्पत्ति-
रित्येवं ह्याह ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ३७ ॥

अग्निहोत्रं जुह्वानो लोभजालं भिनत्त्यतः सम्मोहं
छित्त्वा न क्रोधान् स्तुन्वानः काममभिध्यायमानस्तत-

---

अग्नौ हुतं हविरादित्यं गमयति, अतो हविष आदित्य प्रविष्टाद्यो रसो रश्मिपरिपाकतोऽस्रवत् स एव यद्वीर्यं यथा स्यात् तथा वर्षति, उच्चैः शब्दं कुर्वन् वर्षतीत्यर्थः । तेन वर्षणेन वर्षणनिष्पन्ने-नान्नेनेत्येतत्, इमे प्रसिद्धाः प्राणाः स्थिरा भवन्तीत्यर्थः । प्रा-णेभ्यः प्रजाः जीवन्तो हि बलवन्तः प्रजा भवन्ति इत्यर्थोऽप्येवं उदाहरन्ति, उदाहरणवाक्यं निगदव्याख्यानं । एवं हि आह, मनुरपीति शेषः । 'यद्वै किञ्च मनुरवदत् तद्भेषजं' इति श्रुत्यैव मनोः प्रशंसनात् प्रायः श्रुतिरेव मनुवचनमिति गम्यते । यदाग्नौ प्रास्ताहुतिः सम्यगिति वचनं ऋषिप्रकाशान्तरगत-मेवेदं मनुना निबद्धमिति न मनुप्रणीतमतोऽनादिसिद्धया श्रुत्या कथमर्वाग्भाविस्मृतिवचनमुदाह्रियत इति न प्रष्टव्यं । श्लोक उक्तार्थः ॥ ३७ ॥

इदानीं पृथिवी गार्हपत्य इत्यादिनोक्तप्रकारेणाग्निहोत्रं जुह्वतः फलप्राप्तिं सोपस्करामाह "अग्निहोत्रं • जुह्वानो-

**श्चतुर्जालं ब्रह्मकोशं भिन्द्यात्तःपरमाकाशमथ हि सौरसौम्याग्नेयसात्त्विकानि मण्डलानि भित्त्वा ततः शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्यत्यत्रोदाहरन्ति।**

---

हरन्ति" इति। यथोक्तप्रकारमग्निहोत्रं जुह्वानः कालेन शुद्ध्युपेतान्तःकरणः सन् लोभमयं जालं श्रेयोमार्गनिरोधकं भिनत्ति विदारयति, अतोऽनन्तरं लोभमूलं मोहमविवेकलक्षणं छित्त्वा विवेकेनोत्खात्य क्रोधान् क्रोधमयान् भावान् न स्तुन्वानोऽस्तुन्वानो न प्रशंसन् तान् परित्यजन्निति यावत्। कामं मोक्षलक्षणमभिध्यायमानो मोक्ष एव मे फलमस्त्विति मनसोल्लिखन्नित्यर्थः। ततः एवं सम्यग्विशुद्धेऽन्तःकरणे सति चतुर्जालं ब्रह्मकोशं चतुर्भिरन्नमयप्राणमयमनोमयविज्ञानमयाख्यैर्जालैः परिवेष्टितं ब्रह्मकोशं ब्रह्मणः परस्याच्छादकं मायामयमानन्दमयाख्यं तस्मिन् हि ब्रह्म निहितं श्रूयते (तै०उ०) 'यो वेद निहितं गुहायां परमे व्योमन्' 'ब्रह्म पुच्छं प्रतिष्ठा' इति च। तं कोशं भिन्द्यात् साक्षिसाक्ष्यविवेकलक्षणेन तत्त्वज्ञानेन भिन्दन्नुन्मूलयन् प्रत्यगर्थमुद्धरन्नित्यर्थः। अतःपरमाकाशं सच्छब्दवाच्यं कारणोपाधिकं 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इत्युक्तलक्षणं (छान्दो० अ० ८) प्रविशेदिति शेषः।

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः।
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः॥

अत्र हि आकाशे ब्रह्मणि उपासनार्थं यानि सूर्यसोमाग्नीनां मण्डलानि सात्त्विकानि सत्त्वगुणात्मकानि कल्पितानि तानि भित्त्वा सूर्यादिदेवतादिकमखिलं प्रपञ्चं परे कारणे ब्रह्मणि प्रविलाप्येत्युक्तं भवति, तत उपास्योपासकभेदप्रतिभासहेत्वभावात् शुद्धः प्रत्यगात्ममात्रतया स्थितो विद्वान् सत्त्वान्तरस्थं शुद्धसत्त्वमयान्तःकरणवृत्तावभिव्यक्तिं गतमचलमित्याद्यनेकविशेषणैरुपलक्षितं ब्रह्म पश्यति साक्षादुपलभते मुच्यत इत्यर्थः। अत्र सत्यकामसर्वज्ञत्वसंयुक्तमिति ब्रह्मविशेषणेन कारणे ब्रह्मणि प्रथमं प्रविश्य ततः कालेन शुद्धं ब्रह्म प्रविशतीति गम्यते, उपासनाप्रकरणात्। अत एव सर्वापरं धामेति विशेषणं। सर्वमपरं निकृष्टं यस्मात् तत् सर्वापरं धाम स्थानं, कारणमित्यर्थः। न चैवं सति चतुर्जालं ब्रह्मकोशं भिन्दादित्यनुपपन्नमिति शङ्क्यं, तस्य क्रमप्राप्यपरममुक्त्यपेक्षत्वात्। प्राक्कृतो हि विवेकः प्रारब्धप्रतिबन्धक्षये स्वफलं करिष्यतीति सर्वमनवद्यं। अत्रोक्तेऽर्थे उदाहरन्ति ऋषय इत्यर्थः। उदाहरणं पठति "रविमध्ये ॰ स्थितोऽच्युतः"। तेजोऽग्निः। स्पष्टार्थमन्यत्। मण्डलभेदक्रमेण ब्रह्मप्रवेशनमुदाहृत्य कोशभेदनेन ब्रह्मदर्शनमुक्तमनूद्य तत्राप्युदाहरणमाह "शरीर ॰

शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यणव्यं ध्यात्वातः परमतां गच्छत्यत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति। अङ्गुष्ठप्रादेशशरीरमात्रं प्रदीपप्रतापवत्

---

ब्रह्मणे नमः" इति। शरीरे प्रादेशमात्रपरिमितं हृदयं, तत्राङ्गुष्ठमात्रं कमलं, तदिदं शरीरप्रादेशाङ्गुष्ठमात्रमित्युच्यते। तादृगङ्गुष्ठमात्रकमलान्तरभिव्यक्तत्वादात्माऽप्यङ्गुष्ठमात्रस्तं, अणोरप्यणव्यं अतिसूक्ष्मादपि सूक्ष्मतरं दुर्लक्ष्यं, एवंविधमात्मान ध्यात्वाऽतोऽनन्तरं चतुर्जालं ब्रह्मकोशं भिन्दत् परमतां परमात्मभावं गच्छति यथोपासित परमात्मानमनुभवतीत्यर्थः। अत्र हि परमात्मनि सर्वे कामाः स्वमनोमात्रसङ्कल्पसाधनाः समाहिताः स्थिताः 'सर्वं तदत्र गत्वा विन्दते' इति श्रुत्यन्तरात्। इत्यत्रास्मिन्नुक्तेऽर्थे उदाहरन्ति। अङ्गुष्ठपरिमितकमलयुक्तं प्रादेशशरीरमात्रं प्रादेशपरिमितहृदयान्त.शरीराभिव्यक्तमिति यावत्। प्रदीपप्रतापवत् प्रदीपशिखावत् द्विस्त्रिधा द्विस्त्रिप्रकारं मन्दमध्यमोत्तमप्रकारं तैलवर्त्यादितारतम्यवशात् प्रदीपप्रकाश इवाभिव्यञ्जकान्तःकरणशुद्धितारतम्यादभिव्यक्तितारतम्यवत् तद्ब्रह्मान्तर्यामित्वलक्षणमभिष्टूयमानमभितः स्तूयमानं प्रशस्ततयोपलभ्यमानं महो देवो महान् देवोऽखण्डचिदात्मको भुवनान्याविवेश, यदेवंविधमात्मतत्त्वं तदेव ब्रह्म यच्चेदं ब्रह्म तदेव महान् देवो भुवनानि स्थावरजङ्गमादि-

द्विस्त्रिधा हि। तद्ब्रह्माभिष्टूयमानं महो देवो भुवनान्याविवेश। ओम् नमो ब्रह्मणे नमः ॥ ३८ ॥

इति मैत्र्युपनिषदि षष्ठः प्रपाठकः ॥

जीवरूपेणाविवेश, तस्मादात्मैव ब्रह्म ब्रह्मैवात्मेत्यभेदेन ध्यानं प्रशस्तं तत् कर्तव्यमिति भावः। ॐ नमो ब्रह्मणे नम इति शान्तिपाठो मङ्गलार्थः ॥ ३८ ॥

इति मैत्रीशाखोपनिषद्दीपिकायां षष्ठः प्रपाठकः ॥

**अग्निर्गायत्रं त्रिवृद्रथन्तरं वसन्तः प्राणो नक्षत्राणि वसवः पुरस्तादुद्यन्ति तपन्ति वर्षन्ति *स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुणः शुद्धो भास्वरो गुणभुग् भयो**

---

सप्तमोऽप्ययं प्रपाठकः प्रकीर्णानेकोपदेशपरः। तत्रादितः सप्तभिरनुवाकैः सवित्राश्रयमुपासनं स्वतन्त्रं सविस्तरं सफलमात्मपर्यवसितमुपदिशति, अग्निर्गायत्रमित्यादिना। "अग्निर्गायत्रं ० अन्तरान्तरः" इति। अग्निर्देवता, गायत्रं छन्दः, त्रिवृत् स्तोमः, रथन्तरं साम, वसन्त ऋतुः, प्राणः प्राणवृत्तिरसः, नक्षत्राण्यश्विन्यादीनि, वसवो देवगणविशेषः। एते सर्वे मूर्तिमन्तः सवितुः पुरस्तात् पुरोभागे उद्यन्ति, एतैः पुरोभागे परिवृतः सविता ध्येय इति विवक्षितं। तापकाले एते तपन्ति, वर्षासु वर्षन्ति, तत्तदवसरे सवितारं स्तुवन्ति पुनरस्तं गच्छन्ति, सवितर्यन्तर्विशन्ति अथवा भोगकाले सवित्राश्रितममृतं भोक्तुमन्तर्विशन्ति सवितृमण्डलमनुप्रविशन्ति। विवरेण द्वारेण किरणप्रवृत्तिमार्गेणेक्षन्ति भोज्यममृतमीक्षन्ते पश्यन्ति। अथवा विवरेण समयविशेषेण भोगप्रतीक्षां कुर्वन्तीत्यर्थः। एतदपि अग्न्यादीनां वृत्तान्तं ध्येयं वेदितव्यं। एवंविधैः पुरोवर्तिभिः †स्तूयमानं सावित्रं स्वरूपं ध्येयं निर्दिशति, अचिन्त्य

---

* स्तुवन्तीत्युत्तमपुस्तके सर्वत्र लिखितं, अधमे तु क्वचित् क्वचित् इउरोपीये च पुस्तके सर्वत्र स्तुवन्तीति।

† स्तुयमाणमिति पाठान्तरं।

ऽनिर्वृत्तिर्योगीश्वरः सर्वज्ञो मघोऽप्रमेयोऽनाद्यन्तः श्रीमानजो धीमाननिर्देश्यः सर्वसृक् सर्वस्यात्मा सर्वभुक् सर्वस्येशानः सर्वस्यान्तरान्तरः ॥ १ ॥

इन्द्रस्त्रिष्टुप् पञ्चदशो बृहद्ग्रीष्मो व्यानः सोमो रुद्रा दक्षिणत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरे क्षियन्त्यनाद्यन्तोऽपरिमितोऽपरिच्छिन्नोऽपरप्रयोज्यः स्वतन्त्रोऽलिङ्गोऽमूर्तोऽनन्तशक्तिर्धाता भास्करः ॥ २ ॥

---

इत्यादिना । अमूर्त इति छेदः, अचिन्त्यो मनसोऽगोचरः, अमूर्तोऽपरिच्छिन्नः, गभीरो दुरवगाहः कर्मेन्द्रियागोचर इत्यर्थः, गुप्तो ज्ञानेन्द्रियाविषयः, अनवद्यः पुण्यपापरहितः, घनोऽभेद्यः, गहनो दुर्विवेकः, निर्गुणो रूपादिगुणरहितः, शुद्धो निर्लेपः, भास्वरः सर्वावभासकभारूपः, गुणभुक् त्रिगुणविकारसाक्षी, बिभेत्यस्मात् सर्वमिति भयः कालरूपः, अनिर्वृत्तिरकार्यरूपः, यद्वा निर्वृत्तिः सर्वसिद्धिरूपः । प्रसिद्धार्थमन्यत् । मघो मघवानिन्द्रः पूज्य इत्यर्थः । सर्वस्यान्तरो भोक्ता जीवस्तस्याप्यान्तर आन्तरान्तरोऽन्तर्यामीत्यर्थः ॥ १ ॥

इन्द्रस्त्रिष्टुबित्यादि समानं । "इन्द्रस्त्रिष्टुप् ० भास्करः" इति । अनाद्यन्त इत्यादि विशेषणानि सवितुः पूर्ववद्व्याख्यानार्थानि यथाशब्दं विज्ञेयानि ॥ २ ॥

मरुतो जगती सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम ॥ ३ ॥

विश्वे देवा अनुष्टुवेकविंशो वैराजः शरत् समानो वरुणः साध्या उत्तरत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यन्तःशुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्मानन्तः ॥ ४ ॥

मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिंशौ शाक्वररैवते हेमन्तशिशिरा उदानोऽङ्गिरसश्चन्द्रमा ऊर्द्ध्वा उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकं ॥ ५ ॥

---

मरुतो जगतीत्यादि समानं । "मरुतो जगती ० परं धाम" इति ॥ ३ ॥

विश्वे देवा इत्यादि समानं । "विश्वे देवा ० आत्मानन्तः" इति ॥ ४ ॥

मित्रावरुणौ पङ्क्तिरित्यादि समानं । "मित्रावरुणौ विशोकं" इति ॥ ५ ॥

शनिराहुकेतूरगरक्षोयक्षनरविहगशरभेभादयोऽध-स्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्त-र्विवरेष्वेक्षन्ति यः प्राज्ञो विधरणः सर्वान्तरोऽक्षरः शुद्धः पूतो भान्तः क्षान्तः शान्तः ॥ ६ ॥

एष हि खल्वात्मान्तर्हृदयेऽणीयानिद्धोऽग्निरिव विश्व-रूपोऽस्यैवान्नमिदं सर्वमस्मिन्नोता इमाः प्रजा एष

---

एवं पञ्चसु दिक्षु क्रमेण ध्येयविशेषानुपदिश्याधोभागे च ध्येयविशेषमुपदिशति "शनिराहुकेतू ० क्षान्तः शान्तः" इति। विधरणो विधारको वर्णाश्रममर्यादाया इत्यर्थः। भान्तो भासा युक्तः, क्षान्तः क्षमावान्, तथा शान्त इत्यर्थः ॥ ६ ॥

एवमधिदैवं ध्येयं सविस्तरमुपदिश्य तदनूद्य तस्याध्यात्मं ध्येयं स्वरूपमुपदिशति "एष हि ० हिताय नमः" इति। योऽधिदैवतमादित्यमण्डले उपास्य उक्तः एष हि एव खलु आत्माऽन्तर्हृदये हृदयस्यास्य स्थानस्याणीयस्त्वादणीयानति-सूक्ष्मः, अग्निरिव दीपशिखेवेद्धो दीप्यमान इत्येतत्। विश्व-रूपः सर्वरूपो वैश्वानरो भोक्तेति यावत्। अतोऽस्यैवान्नमिदं सर्वं अविशेषेण सर्वप्राणिभिरद्यमानमिदमन्नमस्यैव वैश्वानरा-त्मनोऽन्नमिति दृष्टिर्विधीयते। अस्मिन् वैश्वानरात्मनि इमाः प्रसिद्धाः प्रजाः स्थावराद्या ओता आश्रिताः पट इव *तन्तु-जातमाश्रित्य स्थिता इत्यर्थः। सर्वात्मको वैश्वानरो भोक्ता

* तन्तुतनमाश्रित्येति भ्रान्तलिखितं।

**आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविचिकित्सोऽविपाशः सत्यसङ्कल्पः सत्यकाम एष परमेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एष हि खल्वात्मेशानः शम्भुर्भवो रुद्रः प्रजापतिर्विश्वसृक् हिरण्यगर्भः सत्यं प्राणो हंसः शास्ताऽच्युतो विष्णुर्नारा-**

---

तस्यैवेदं सर्वैरद्यमानं सर्वप्रकारमन्नमिति ध्यात्वा प्राप्तमन्नं भुञ्जानोऽन्नदोषैर्न लिप्यत इत्येतमर्थं सूचयन्ती आत्मानं विशिनष्टि, एष इति। अपहतपाप्मा पुण्यपापलेपरहित इत्यर्थः, पुण्यमप्यत्र पापशब्देन गृह्यते तस्यापि पापवत् संसारबन्धहेतुत्वात् 'उभे ह्येवैष एते तरति न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति च श्रुतेः। विजरो विमृत्युरिति जरामृत्युधर्मकात् स्थूलदेहाद्विविच्यते। विशोक इति शोकादिधर्मकादन्तःकरणात्। विविधा चिकित्सा विचिकित्सा सहजस्य क्षुद्व्याधेर्निवर्तनं, सा यस्यास्ति स विचिकित्सोऽन्नोपष्टब्धजीवनः प्राणः, तस्मादन्योऽयमात्मा अविचिकित्सः, अत एवात्र शाखान्तरेऽविजिघत्स इति पठ्यते। खादितुमिच्छा जिघत्सा तया रहितोऽविजिघत्स इत्यर्थः। अविपाश इति वर्णव्यत्ययेनापिपासः पिपासारहित पिपासाधर्मकात् प्राणादन्य इत्यर्थः। स्थूलसूक्ष्मदेहोपाधिनिषेधे तद्दोषानास्कन्दितत्वात् सत्यसङ्कल्पः सत्या अवितथाः सङ्कल्पा यस्य सः, अत एव सत्य-

**यश्चो यश्चैषोऽग्नौ यश्चायं हृदये यश्चासा आदित्ये स एष एकस्तस्मै ते विश्वरूपाय सत्ये नभसि हिताय नमः ॥ ७ ॥**

---

कामः, काम्यन्त इति कामाः सत्या यथासङ्कल्पमवश्यम्भाविनो यस्य स सत्यकामः । यत एवमथमुपाधेरुद्भूतोऽत एष एव परमेश्वर एष भूताधिपतिर्भूतानां स्वामी एष भूतपालः पालयिता यत एष सेतुर्जगन्मर्यादोत्तम्भको यतो विधरणो विधारको वर्णाश्रमादिधर्माणां तद्धेतुनाशेति शेषः । इदानी-मुक्तगुणमात्मानं स्तौति, एष हि स्वत्वात्मेशानो च उक्तः स एव शम्भ्वादिशब्दवाच्यो नान्य इत्यर्थः । उक्तयोरध्यात्माधि-दैवोपाधिकयोरात्मनोरुपाधिद्वयापोहेनैकत्व वास्तवं रूप-मुपदिशत्यङ्गुहत्वाय यश्चैषोऽग्नावित्यादिना । अग्निग्रहण-मधिदैवस्यादित्यस्य प्रकाशोपजीविसर्वविभूतिग्रहणोपलक्षणार्थं । यश्चायं हृदये प्रत्यङ् पुरुषः, यश्चासावादित्ये परोक्षः स आदि-त्यस्थः एष हृदयस्थश्च एक एव नानयोर्वस्तुतत्त्वे भेदोऽस्तीत्यर्थः । एवमनुसन्धायोपास्यस्वरूपं मन्त्रमिममुदीरयेदित्यभिप्रेत्याह, तस्मै त इति । सत्ये नभसि ब्रह्माकाशे हिताय निहिताय स्वस्वरूपे स्थितायेत्यर्थः ॥ ७ ॥

तदेव श्रेयोऽर्थिनामुपादेयं साधनजातं सोपस्कर सफल-मनेकधोपदिश्येदानीं श्रेयोमार्गविघातकं परिहरणीयं सम्यग्

**अथेदानीं ज्ञानोपसर्गा राजन्मोहजालस्यैष वै योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्यैष वाट्ये पुरस्तादुक्तेऽप्यधः-स्तम्बेनाश्लिष्यन्त्यथ ये चान्येह नित्यप्रमुदिता नित्य-प्रवसिता नित्ययाचनका नित्यं शिल्पोपजीविनोऽथ**

---

व्युत्पादयति "अथेदानीं ० विद्यान्तरन्तु यत्" इति । अथोपादेयविध्यर्थनिरूपणानन्तरमिदानीं हेयनिषेधार्थकथनावसरे प्राप्ते ज्ञानोपसर्गाः ज्ञानोत्पत्तिविघातका हेतवः प्रस्तूयन्त इति शेषः । राजन्निति सम्बोधन प्रदर्शनार्थमयमुपदेशप्रकार एवाख्यायिकायाः पुरा समापनात् । के ते ज्ञानोपसर्गा इत्याकाङ्क्षायां यन्मोहजालं वस्तुतत्त्वाविवेकनिबन्धनमित्युत्तरं पूरणीयं । पुनः कुतो मोहजालप्रसर इत्याकाङ्क्षायामाह, मोहजालस्यैष वक्ष्यमाणो वै प्रसिद्धो योनिः प्रसरणस्थान । कोऽसौ यदस्वर्ग्यैः स्वर्गानर्हैर्नास्तिकादिभिः सह स्वर्ग्यस्य स्वर्गार्हस्य वैदिकस्य संसर्ग इत्यध्याहारः । पुनरेष इति पूर्वोक्तस्यैवाकर्षणमन्वयस्पष्टीकरणार्थं । तत्र निदर्शन लुप्तोपमाव्यञ्जकमाह, वाट्य इति । वाटीमर्हतीति वाट्यो महाशाख्याम्रपनसादिः, तस्मिन् पुरस्तात् पुरःस्थितत्वेन केनचिदाप्तेनोक्तेऽपि तमनादृत्याधःस्तम्बेन क्षुद्रेण तृणशलाकया सहाश्लिष्यन्ति स्तम्बप्रभव छायाफलादिक बहु मन्यन्ते इत्यर्थः । एष दृष्टान्तो मोहस्येत्येष पदस्येहैव वान्वय. । अथ पुनर्ये च येऽप्यन्ये इह-

**ये चान्ये इह पुरयाचका अयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसोऽथ ये चान्ये इह चाटजटनटभट-प्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयोऽथ ये चान्ये इह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयाम इत्येवं ब्रुवाणा अथ ये चान्येह वृथा**

---

लोके नित्यप्रमुदिता ऐहिकैरेव लाभैः सदा सन्तुष्टाः, ये च नित्यप्रवसिताः सदा परप्रेष्याः, नित्ययाचनकाः सदा दीनाः, नित्यं शिल्पोपजीविनः कारुकर्मकौशलेन जीवननिरता इत्यर्थः। अथ ये चान्ये इह पुरयाचका नगरभिक्षवः ये चायाज्यान् याजनानर्हान् याजयन्ति तेऽयाज्ययाजकाः, ये चान्ये शूद्र-शिष्याः शूद्राद् यां कामपि विद्यां गृहीतवन्तो ब्राह्मणादयस्ते शूद्रशिष्याः, ये च शूद्राः शास्त्रं श्रुतिस्मृतिपुराणलक्षणं विदन्ति पठन्ति पाठयन्ति वा ते शास्त्रविद्वांसः। अथ ये चान्ये इह चाटाः पिशुनाः, जटा अपरिच्छिन्नाश्रमस्थवटनपराः, नटा नर्तनोपजीवनाः, भटा योधास्तस्करा वा, प्रव्रजिताः कार्प-टिका भिक्षवो भिक्षुवेषधारकाः रङ्गावतारिणोऽनेकवेष-भाषाविशेषैर्नाटकनाट्यजीविनः, राजकर्मणि राज्ञे ये नियुक्ता इत्यध्याहारः, राष्ट्रसंरक्षणे चोरशासनादावधिकृता इत्यर्थः। ये च पतिता महापातककृतो राष्ट्रान्निःसारिताः स्थिता वा, आदिपदादभिशस्ता गृह्यन्ते। अथ ये चान्ये इह यक्षेति,

**कषायकुण्डलिनः कापालिनोऽथ ये चान्ये ह वृथा-तर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् प्राकाश्यभूता वै ते तस्करा अस्वर्ग्या इत्येवं ह्याह ।**

**नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।**
**भ्राम्यन् लोको न जानाति वेदविद्यान्तरन्तु यत् ॥ ८ ॥**

---

यक्षादीनामिति कर्मणि षष्ठी । अर्थं पुरस्कृत्य धनादिकं स्वजीवनमुद्दिश्य ये यक्षादीन् प्राणिपीडकान् शमयाम उच्चाटनादिभिर्निवारयाम इत्येवं ब्रुवाणा मन्त्रयन्त्रपरा इत्यर्थः । अथ ये चान्ये वृथा मिथ्या कषायवाससः कुण्डलिनः शङ्खादिशकलकृतकुण्डलधारिणः कापालिनः कपालभिक्षवः । अथ ये चान्ये वृथातर्कोऽनुग्राह्यप्रबलप्रमाणशून्यः स्वबुद्धिकल्पितः दृष्टान्तः प्रायोदृष्टस्योदाहरणं क्वचिद्दृष्टस्य वोदाहरणं दृष्टान्तः, कुहकं छलग्रहः प्रतारणं वा, इन्द्रजालं प्रत्यक्षतो मिथ्यार्थप्रदर्शनं । एतैर्द्वारैर्ये वैदिकेषु वेदोक्तमार्गैकनिरतेषु परिस्थातुं परिपन्थितया स्थातुमिच्छन्ति तैः सह न संवसेत्, ये च पूर्वोक्तास्तैश्च न सह संवसेदित्यर्थः । तत्र हेतुमाह, ते वै निश्चितं प्राकाश्यभूता अपरोक्षा एव तस्कराश्चोराः परवित्तापहारिणः प्रसिद्धाः यावन्त उक्तास्ते अस्वर्ग्या यतः, अतो वैदिकानभिभूय ज्ञानमार्गमवरुन्धते इति वैदिकैर्वेदोक्तपुरुषार्थार्थिभिस्तत्सङ्गस्त्याज्य इत्यर्थः, इत्येवं ह्याह ।

बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्य क्षया-
येमामविद्यामसृजत तया शिवमशिवमित्युद्दिशन्त्य-
शिवं शिवमिति वेदादिशास्त्रहिंसकधर्माभिध्यान-
मस्त्विति वदन्त्यतो नैनामभिधीयेतान्यथैषा वन्ध्येवैषा

नैरात्म्यवादः शून्यक्षणिकविज्ञानाद्यात्मवादः। वेदविद्यान्तरमिति वेदं विद्यान्तरञ्चेत्यर्थः॥ ८॥

इदानीं वेदविरोधिनां मार्गस्य प्रवृत्तिमूलमितिहासमाह "बृहस्पतिर्वै ० इत्येवं ह्याह" इति। बृहस्पतिर्वै प्रसिद्धो देवपुरोहितः कदाचित् शुक्रो भूत्वा शुक्ररूपमास्थायेमामविद्यामसृजदिति सम्बन्धः। किमर्थं इन्द्रस्याभयाय चेमामसुरेभ्योऽसुराणां क्षयाय नाशाय, असुरान्मोहयित्वेन्द्रं रक्षितुमित्यर्थः। याऽविद्या बृहस्पतिना सृष्टा तया शिवं परिणामे सुखकरमशिवमकल्याणं दुःखमित्युद्दिशन्ति कथयन्ति नास्तिका इति शेषः। अशिवमकल्याणं शिवमिति चोद्दिशन्तीत्यनुवर्तते। तेषामभिप्रायमाह, वेदेति। वेदश्रुतिपुराणादिरूपशास्त्रस्य हिंसको यो धर्मः पाषण्डादिरूपस्तस्याभिध्यानं पुनः पुनरनुसन्धानमस्तु लोकस्येति शेषः। इति वदन्ति मूर्खा उपदिशन्ति। अतो नैनां विद्यां धर्मकञ्चुकैरवैदिकैर्नास्तिकैश्च प्रसार्यमाणामभिधीयेत न पठेच्च शृणुयाच्चेत्यर्थः। अतोऽन्यथा विपरीतैषा विद्या महतः श्रेयसो विघातिनी स्वरूप-

रतिमात्रं फलमस्या वृत्तच्युतस्येव नारम्भणीयेत्येवं ह्याह।

दूरमेते विपरीते विषूची
अविद्या या च विद्येति ज्ञाता।
विद्याभीप्सितं नचिकेतसं मन्ये
न त्वा कामा बहवो लोलुपन्ते॥

---

तोऽपि वन्ध्यैवैषा निष्फला। यतो रतिमात्रं तात्कालिकं फलमस्या न भाविशुभफलमस्तीत्यर्थः। वृत्तं पारम्पर्यक्रमागत आचारस्तस्मात् च्युतस्य भ्रष्टस्य यथेह परत्र वा न सुखं स्वजात्यपरिग्रहाद्यमयातनागोचरत्वाच्च, तद्वद्वेदविरुद्धागमाचारनिरतस्यापि इह शिष्टैः परित्यागात् परत्र च नरकगतित्वाच्च नारम्भणीयैषा बार्हस्पत्या विद्या इत्येवमस्मिन्नर्थे ह्याह विद्याविद्ययोर्विरोधं कठश्रुतिरित्यर्थः। "दूरमेते ० लोलुपन्ते" इति। या चाविद्या या च विद्या इति ज्ञाता निश्चिता पण्डितैरेते विद्याविद्ये दूरमत्यन्तं विपरीते विरुद्धस्वभावे विरुद्धविषयत्वात् स्थितिगतिप्रत्ययाविवेत्यर्थः। न केवलं स्वरूपतो विषयभेदादेव विरुद्धे अपि तु फलभेदादपीत्याह विषूची विषूच्यौ विश्वञ्चनाद्विषूच्यौ नानागती विरुद्धफले इत्यर्थः। एवं विद्याविद्ययोः स्वभावमभिधाय यमो नचिकेतसं प्रत्याह, विद्याभीप्सितमिति। विद्यैवाभीप्सिता यस्य स

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥
अविद्यायामन्तरे वेष्ट्यमानाः
स्वयन्धीराः पण्डितम्मन्यमानाः ।

विद्याभीप्सितस्तं नचिकेतसं नचिकेतोनामानं त्वामहं मृत्युर्मन्ये जानामि यतस्त्वा त्वां बहवोऽपि मया दत्ताः कामा विषया न लोलुपन्ते त्वां न लोपितवन्तः आत्मोपभोगवाञ्छापादनेन श्रेयोमार्गाद्विच्छेदं न कृतवन्त इत्यर्थः । विद्याविद्ययोर्भिन्नफलत्वमात्रे ईशावास्याध्यायस्थं मन्त्रमुदाहरति "विद्याञ्चाविद्याञ्च ° विद्ययामृतमश्नुते" इति । विद्यां देवेश्वरात्मविषयां भावनां, अविद्यां तद्विपरीतां कर्मनिष्ठालक्षणां च, यस्तदुभयं सह समुच्चित्य वेद व्यवधानाव्यवधानाभ्यामविद्याविद्ये एकत्र पर्यवसिते अतः क्रमेणैकपुरुषेणानुष्ठेये इति यो वेद उपास्ते तत्परो भवति सोऽविद्यया कर्मनिष्ठया मृत्युं विद्योत्पत्तिप्रतिबन्धकं पापं तीर्त्वाऽतिक्रम्य विद्यया औपनिषदयाऽमृतत्वं मोक्षमश्नुते प्राप्नोति इति मन्त्रार्थयोजना । तथा चाविद्याऽपि वेदविहिता विद्योपयोगिनी चेत् तदोपादेयाऽपीत्यत्रोदाहरणमुक्त्वा तद्विपरीता तु हेयैव, तामनुसृतोऽनर्थपरम्पराया अविच्छेद एव स्यादित्यस्मिन्नर्थे उदाहरणमाह "अविद्यायामन्तरे ° यथान्धाः" इति । अविद्या आत्मतत्त्वस्फुरणप्रतिबन्धात्मिका तद्विपरीतार्थसामीचीन्यावभासिनी च, तस्या-

**दन्द्रम्यमाणाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथान्धाः ॥ ९ ॥**

---

मन्तरेऽभ्यन्तरे तमसीव भुजङ्गतत्त्वावरणे रज्जुत्वावभासनिमित्ते वर्तमाना ये ते मूढा इति योजना । मोहव्याप्ताः सद्सद्विवेकशून्याः ते किं परियन्ति संसारमण्डले परिभ्रमन्ति, नैषां श्रेयःप्राप्त्याशाऽस्तीत्यर्थः । किंलक्षणास्त इति तान् विशिनष्टि, वेष्ट्यमानाः पुत्रपशुधनक्षेत्रादितृष्णापाशशतैः संवेष्ट्यमानाः । अनेन तेषां संसारपरिभ्रमणाविच्छेदे कारणमुक्तं । तथा च श्रुत्यन्तरं 'कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र' इति । स्वयन्धीराः पण्डितम्मन्यमाना इति विशेषणान्तरं । वयमेव धीरा धीमन्तो विवेकिनः शास्त्रकुशला इत्यात्मानं पण्डितं मन्यमाना नतु सम्यक् पण्डितास्ते । अनेन तेषां सत्सङ्गदौर्लभ्य दर्शितं । पुनस्तान् विशिनष्टि, दन्द्रम्यमाणाः कुटिलामनेकरूपां गतिं गच्छन्तः, जरामरणरोगादिदुःखशतैरुपद्रूयमाणा इति वा, अनेन तेषां पुण्यमार्गप्रवृत्त्यभावः सूचितः । तेषां मार्गप्रदर्शका अपि तादृशा एवेत्यभिप्रेत्य दृष्टान्तमाह, अन्धेनैवेति । एकेनाग्रयायिनाऽन्धेन नीयमाना देशाद्देशान्तरं प्रत्याकृष्यमाणा यथा बहवोऽन्येऽन्धाः पुरोऽन्धेन सह कूपकण्टकादिषु पतन्तो महान्तमनर्थं प्राप्नुवन्त्येवं वेदविरुद्धविद्वन्मन्यप्रदर्शितमार्गगा अपि तेनैव सह निरयप्राये संसारे पतन्तीत्यर्थः ॥ ९ ॥

देवासुरा ह वै य आत्मकामा ब्रह्मणोऽन्तिकं प्रयाता-स्तस्मै नमस्कृत्वोचुर्भगवन् वयमात्मकामाः स त्वं नो ब्रूहीत्यतश्चिरं ध्यात्वाऽमन्यतान्यतात्मानो वै तेऽसुरा अतोऽन्यतममेतेषामुक्तं तदिमे मूढा उपजीवन्त्यभि-

इदानीं वेदैकविषये सर्वशिष्टमतोपरोधनायेतिहासमवतारयति "देवासुरा ह वै० इत्यादिना" इति। देवाश्च असुराश्च देवासुराः, ह वै इत्यैतिह्यार्थौ निपातौ, ये बभूवुः पूर्वं देवाश्चासुराश्च ते आत्मकामा आत्मज्ञानकामाः सन्तो ब्रह्मणः स्वपितुः प्रजापतेरन्तिकं समीपं प्रयाताः, तस्मै ब्रह्मणे नमस्कृत्वा ऊचुर्हे भगवन् वयं ह्यात्मकामास्त्वामुपसन्नाः स त्वमस्मद्गुरुर्नोऽस्मभ्यं ब्रूहि आत्मतत्त्वमिति शेषः' इत्यूचुरिति सम्बन्धः। अतो यत आत्मतत्त्वं न सहसा वक्तुमुचितमतश्चिरं ध्यात्वा विचार्यामन्यत तत्कालोचितं वक्तव्यं विजज्ञौ किं अन्यतात्मानो वै तेऽसुराः, प्रसिद्धा असुरा अन्यतात्मानोऽन्यतायामन्यत्वे भेदवति देहादावात्ममतय इत्यर्थः। अयतात्मान इति क्वचित् पाठः सुगमः। तथा च देहात्मवादं प्रकृत्य छान्दोग्ये श्रूयते 'असुराणां ह्येषोपनिषत्' इति। अतःपरं श्रुतिवचनं। यतो दृढं भेददृष्टयोऽसुरा अतोऽन्यतमं देवेभ्य उक्तादत्यन्तमन्यदेतेषामसुराणामात्मतत्त्वं प्रजापतिनोक्तमित्यर्थः। यद्यपि प्रजापतिना देवानामसुराणां च साधारणमेवात्मतत्त्वमुक्तं तथापि

**ष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशंसिनः सत्यमिवानृतं पश्यन्तीन्द्रजालवदित्यतो यद्वेदेष्वभिहितं तत् सत्यं यद्वेदेषूक्तं तद्विद्वांस उपजीवन्ति तस्माद्ब्राह्मणो नावैदिकमधीयीतायमर्थः स्यादिति ॥ १० ॥**

---

स्वचित्तदोषवशादसुरैरन्यथावगत, इदमेवात्मतत्त्वमस्माकं प्रजापतिनोक्तमिति मन्यमानैरिति भावः। तत् आसुरमात्मतत्त्वमिमे प्रत्यक्षा इदानीन्तना अपि मूढा अविवेकिन उपजीवन्ति आदरेण गृहीत्वा तिष्ठन्ति, अभिष्वङ्गिणोऽत्यासक्तास्तत्पराः सन्त इत्यर्थः। ते किंलक्षणास्तर्याभिघातिनः तीर्यतेऽनयेति तरिः संसारसागरातिक्रमणसाधनमात्मतत्त्वज्ञान, तस्यां साधनत्वेन भवति इति वेदशास्त्र तर्यं, तस्याभिहननशीलाः वेदमार्गविदूषका इत्यर्थः। अनृताभिशंसिनो ज्ञानादज्ञानाद्वापि मृषावदनशीलाः। यतस्तेऽनृतमेव सत्यमिव पश्यन्ति सत्यमेव पश्यन्तीत्यर्थः। अनृतस्य सत्यत्वेन दर्शने दृष्टान्तमाह, इन्द्रजालवदिति। यत एवं वेदविरुद्धः सम्प्रदाय आसुर एवासत्यमूलस्त्वातो यद्वेदेष्वभिहितमुक्तं तत्सत्यं यथार्थं तदुपादेयमित्यर्थः। यद्वेदेषूक्तं तदेव विद्वांसः सम्यक्पण्डिता उपजीवन्ति आदरेण गृह्णन्ति, न हेतुवादपटुभिरभिहितमित्यर्थः। अनयाऽऽख्यायिकयोपादेयमर्थमुपदिशति, तस्मादिति। ब्राह्मणग्रहणमुपलक्षणं, त्रैवर्णिको न कदाप्यवैदिकं वेदविरुद्धं वेदार्थ-

**एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यत् परं तेजस्त्रेधाभिहितमग्नौ आदित्ये प्राणे एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यदोमित्येतदक्षरमनेनैव तदुद्भवत्युदयत्युच्छ्वसत्यजस्रं ब्रह्मधीयालम्बं वाचैवैतत्**

ज्ञानानुपायरूपं च शास्त्रान्तरमधीयीतेत्यर्थः। तादृक् शास्त्रान्तराध्ययने दोषं सूचयति, अयमर्थः स्यात्। अथ स सुरदृष्ट्योपायात्तोऽधःपातरूपोऽर्थः फलं स्यादिति भयादिति वाक्यशेषः॥ १० ॥

यद्वेदपूर्वं तत्सत्यमिति यदुक्तं तत्र वेद एव कथमिति जिज्ञासायां तस्य तत्त्वं वक्तुमुत्तरोऽनुवाकः प्रवर्तते एतद्वावेति। "एतद्वाव तत्स्वरूपं ० परिमितं तेजः" इति। एतद्वावैतदेव तस्य वेदस्य स्वरूपं यन्नभसो ब्रह्माकाशस्य खे हृदयसुषिरेऽन्तर्भूतस्य मध्ये सिद्धस्य, यत्परमलुप्यमानं तेजः सर्वावभासकं चैतन्यस्वरूपं तत्तेजस्त्रेधा प्राधान्यमाश्रित्याभिहितमुक्तं पूर्वं, अग्नौ आदित्ये प्राणे च विभाव्यमानमित्यर्थः। तथा च यदस्याध्यात्मना बहिरवभासकं तेजस्तदेव खेऽन्तर्भूतस्य नभसः परं तेजस्तदेव च वेदस्य स्वरूपमित्युक्तं भवति। तदेवैतल्लक्षणं तेजः प्रथमसोङ्कारात्मकमासीदित्याह, एतद्वावेति। यदोमित्येतदक्षरं प्रसिद्धमस्ति तदेतद्वाव खेऽन्तर्भूतस्य नभसो रूपमभिव्यक्तं रूपान्तरमित्यर्थः। कुत एतदित्यत आह, अनेनेति। एतत् तेजोऽनेनैवोमित्येवमात्मकेनाक्षरेण रूपेण तदुद्भ-

**समीरणे प्रकाशप्रक्षेपकौष्ण्यस्थानीयमेतद्धूमस्येव समीरणे नभसि प्रशाखयैवोत्क्रम्य स्कन्धात् स्कन्धमनुसर-**

---

त्युन्नतबुध्नं भवति बीजस्येवोच्छूनता वेदस्याद्यावस्थारूपं जायत इत्यर्थः। तत् उदयति उद्गच्छति अङ्कुर इवान्तर्नादरूपप्रणवाकारं भवति. ततः क्रमेणोच्छ्वसत्युच्छ्वास इव दीर्घस्वरेणोच्चारणस्थानं प्राप्याक्षररूपमवतिष्ठत इत्यर्थः। एवमभिव्यक्तप्रणवाकारब्रह्मतेजोरूपो वेदोऽजस्रं नैरन्तर्येण ब्रह्मधीयालम्बं, विशिष्टपाठः छान्दस', ब्रह्मबुद्धेरुपासनात्मिकाया आलम्बनमित्यर्थः। वाशब्दात् ब्रह्मतत्त्वबुद्ध्यालम्बन चेत्यर्थः। अधिकारिभेदात् बुद्धिद्वयालम्बनत्वविकल्पार्थो वा वाशब्दः। अत्रैवाऽस्यामेवावस्थायामेतत् तेजः प्रणवमात्राकारं सत् समीरणे कोष्ठगते प्राणे घोषवति सहकारिणि सम्पन्ने सति इतिशेषः। प्रकाशं प्रक्षिपति त्यजति इति प्रकाशप्रक्षेपकः. जठरकुहरवार्यग्निस्तस्यौष्ण्यस्थाने भवं प्रकाशप्रक्षेपकौष्ण्यस्थानीयं तत्तेजोऽनुप्रसरतीत्युत्तरत्रान्वयः। अनुप्रसरणप्रकारं दृष्टान्तेन स्पष्टयति, एतदिति। एतदनुप्रसरणं धूमस्येव द्रष्टव्यं, यथा धूमो नभसि समीरणे वायौ वाति सति प्रशाखयैव प्रकृष्टया शाखया शाखाकारया लेखयोत्क्रम्योर्द्ध्वदेशं गत्वा वृक्षस्य स्कन्धात् स्कन्धमनुसरति तत्तत्स्कन्धैरभिहन्यमानस्तत्तदाकारतामश्नुते, तथैतद्ब्रह्मतेजो मूलाधारोपर्यग्निमण्डले तत्रस्थेनाग्निना सन्तप्तेऽभिव्यक्तं घोषवत्प्राणवायुनाग्नौ धम्यमाने तमेव वायुमग्निं

त्यस्य प्रक्षेपको लवणस्येव घृतस्य चौष्ण्यमिवाभिध्यातु-
र्विसृतिर्वैतदित्यचोदाहरन्ति । अथ कस्मादुच्यते

चोपाधिमवष्टभ्य प्रथमं नादमात्रप्राणात्मनाविर्भूय क्रमेण हृत्कण्ठताल्वादिस्थानैः प्रसरणावच्छेदैरभिहन्यमानं नानावर्णात्मनोद्भूय नानाविद्यास्वात्मकं भवतीति दार्ष्टान्तिकं योज्यं एवमेकरूपस्य चैतन्यज्योतिषोऽनेकरूपवेदात्मना प्रसरणं दृष्टान्तमुक्त्वा प्रसरणेनावस्थान्तरं गतस्यापि न स्वभावान्यत्वं स्वरूपविनाशो वेत्यत्र दृष्टान्तद्वयमाह. अप्सु प्रक्षेपक इति । प्रक्षेप एव प्रक्षेपकः. यथा लवणस्य पिण्डीभूतस्याप्सु प्रक्षेपो न लवणस्वभावहानिकरस्तदवस्थस्याऽपि लवणरसानपायात. यथा वा घृतस्यौष्ण्यमुष्णसंस्पर्शो न घृतमन्यथयति एवमिदमपीत्यर्थः । आभ्यां दृष्टान्ताभ्यामयमप्यर्थः सूचितः, यथा जलाग्न्युपाधिविगमे लवणघृतयोः पूर्वावस्थापत्तिः पिण्डाकारेण तथा ब्रह्मतेजसोऽपि कायाग्निप्राणमनआद्युपाध्यपगमे स्वरूपेण चिद्घनावस्थापत्तिरिति न वेदस्यानित्यत्वमिति । इदानीं सुप्तप्रबोधवत् झटिति वेदात्मना चिदाविर्भावे दृष्टान्तमाह, अभिध्यातुर्विसृतिरिवैतदिति । एतद्वेदरूपेण चैतन्यप्रसरणमभिध्यातुरभिध्यानकर्तुः सङ्कल्पमात्रेण प्रासादादिकार्यनिर्मातृयोगीश्वरस्य विसृतिर्विस्तार इव. अयमीश्वरचिद्विस्तारो वेद इत्यर्थः । अत्रास्मिन्नर्थे उदाहरन्ति पृच्छन्ति शिष्या इत्यर्थः । किं तदाह. अथ कस्मादिति उत्तरमाह. यस्मादिति ।

वैद्युतो यस्मादुच्चारितमात्र एव सर्वं शरीरं विद्योतयति तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजः।

पुरुषश्चाक्षुषो योऽयं दक्षिणेऽक्षिण्यवस्थितः।
इन्द्रोऽयमस्य जायेयं सव्ये चाक्षिण्यवस्थिता॥

यस्मादुच्चारितमात्र एवायं वेदः प्रणवात्मा सर्वं शरीरं जगदित्येतत् विद्योतयति प्रकाशयति तस्माद्वैद्युत इति वेद उच्यत इति योजना। यस्माद्घृतपिण्डवद्घनीभूतवेदावस्था प्रणवात्मकमिदं ब्रह्मासीत् तस्मादोमित्यनेनैतदपरिमितं ब्रह्म तेज उपासीत प्रणवमालम्ब्य ब्रह्म ध्यायीतेत्यर्थः। एतदुक्तं भवति सर्ववेदार्थावलम्बननिबन्धना हि सर्वे कामाः पुरुषार्थभूताः प्रसिद्धाः, ते सर्वे प्रणवालम्बनं ब्रह्म ध्यायतो भवन्ति प्रणवस्य सर्ववेदात्मकत्वाद्ब्रह्मणश्च सर्वार्थात्मकत्वात् सर्वपुरुषार्थरूपत्वाच्चेति। वेदोद्गमस्यानन्तरं निरूपणात् तदर्थप्रकाशकाः श्लोका मनःकायाग्निमाहन्तीत्यादय एवात्र यद्यपि निवेशयितुं युक्तास्तथापि ॐमित्यनेनैतदुपासीतेति परस्य तेजस उपासनविधानादुपास्यस्य तेजसो विशेषावस्थानस्थानं वक्तुं मध्ये पुरुष इत्यादयः श्लोका उपात्ताः। तेषाञ्च चाक्षुषः स्वप्नचारी चेति परत्र वर्तिष्यमाणैः श्लोकैरेकवाक्यता बोद्धव्या। तथा च यथापाठक्रममिह व्याख्यानेऽप्यर्थक्रमेणैवार्थसङ्गतिर्द्रष्टव्या। "पुरुषश्चाक्षुषो ० द्विधा सतौ" इति। योऽयं दक्षिणेऽक्षिण्यवस्थितश्चाक्षुषः पुरुषः प्रसिद्धो द्रष्टा अयमिन्द्रः परमेश्वरः, या

समागमस्तयोरेव हृदयान्तर्गते सुषौ ।
तेजस्तल्लोहितस्यात्र पिण्ड एवोभयोस्तयोः ॥

देवता मध्ये वामेऽक्षिण्यवस्थिता। इयमस्येन्द्रस्य जाया पत्नीति योजना। उक्तञ्च बृहदारण्यके 'इन्धो ह वै नाम योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण' (अ. ६) इति। 'अथ यद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट्' (अ. ६) इति च। इयमनयोर्जाग्रदवस्थोक्ता। स्वप्नमाह, समागम इति। हृदयान्तर्गते सुषौ छिद्रे नाडीजालसमावृते तयोरिन्द्राण्योः समागम एकस्थानेऽवस्थानं मिथुनीभाव इत्यर्थः। तयोरन्तर्हृदयाकाशे सुप्तयोस्तेजस्तेजः जीवनमन्नमिति यावत्, तच्च लोहितस्य पिण्डः परिणामस्तदुभयोस्तयोरन्नमित्यर्थः। तथा च बृहदारण्यके 'तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथै-नयोरेतत् प्रावरणं यदेतदन्तर्हृदये जालकमिव' इति यदन्नपानञ्चोपयुज्यते प्राणिभिस्तदौदर्येणाग्निना पच्यमानं स्थूल-मध्यमाणिष्ठभागतामापद्यते, तत्र स्थूलो भागः पुरीषमूत्रादिरूपो बहिर्गच्छति, मध्यमस्तु नाडीद्वारा सर्वं शरीरं रसलोहितमांसादिरूपेण परिणम्यानुप्रविशति, अणिष्ठस्तु मन-आदीनुपचिनोति। तत्र यो मध्यमो रसभागः स लोहित-पिण्ड इत्युच्यते तस्य शरीरस्थितिहेतुत्वात्, तयोस्तदन्नमिति तात्पर्यार्थः। इदानीं तयोः सञ्चरणमार्गमाह, हृदयादिति।

हृदयादायती तावच्चक्षुष्यस्मिन् प्रतिष्ठिता।
सारणी सा तयोर्नाडी द्वयोरेका द्विधा सती॥
मनः कायाग्निमाहन्ति स प्रेरयति मारुतं।
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरं॥

- -- - -

या नाडी हृदयान्निर्गता तावदायती दीर्घा यावच्चक्षुरतोऽस्मिंश्चक्षुषि प्रतिष्ठिता, सरतोऽस्यामिन्द्रेन्द्राण्याविति वा सारयत्येताविति वा सारणी नाम नाडी सञ्चरणमार्गभूता एकापि सती तयोर्द्वयोः सव्यदक्षिणाक्षिप्रापकत्वात् द्विधोच्यते इत्यर्थः, 'अथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्द्ध्वा नाड्युच्चरति' (बृहदा०) इति श्रुत्यन्तरं। एवमनयोर्जाग्रत्स्वप्नावस्थातत्सञ्चरणमार्गा उक्ताः। इदानीं सुषुप्तप्राप्तिक्रमेणावस्थात्रयातीतं तुरीयं पदमेकरसं तत्त्वमनयोर्वैक्यं तदिहार्थादुक्तमेवेति सिद्धवत्कृत्य प्रकृतं वेदाविर्भावविषयं श्लोकजातमुदाहरति "मनः ० एवमाहुः" इति। उद्बुद्धार्थवासनतयात्मविवक्षानुगृहीतया बुद्ध्या नियुक्तं मनः कायाग्निं शरीरस्थितमूष्मरूपमग्निमाहन्ति प्रबोधयति, स कायाग्निर्मारुतं वायुं प्राणाख्यं प्रेरयति व्यापारयति घोषवन्त-मापादयतीत्यर्थः। मारुतस्तूरसि चरन् सञ्चरन् मन्द्रं स्वरं घोषं जनयति, ततः खजाग्नियोगात् निर्मन्थनकाष्ठं खज इत्युच्यते, खजस्थानीयेनाग्निना योगाद्धृदि उरःप्रदेशे सम्प्रयुक्तं सम्यगालोडितं तन्मारुतस्वरूपं मनोवृत्त्युपरक्तं प्रथममणोः

स्वशाग्नियोगाद्धृदि सम्प्रयुक्त-
मणोर्द्व्यणुर्द्विरणुः कण्ठदेशे ।
जिह्वाग्रदेशे त्र्यणुकञ्च विद्धि
विनिर्गतं मातृकमेवमाहुः ॥

स्वस्मात केवलान्मारुताद्धि यस्मात् अणुरेव मन्द्रस्वरात्मको जातः सः पुनः कण्ठदेशं प्राप्त द्विरणुर्द्विगुणितः, पुनर्जिह्वाग्रदेशे गतं त्र्यणुकं त्रिगुणितं विद्धि । एवं विनिर्गतं क्रमेणाभिव्यक्तं वर्णजातं, मातृकं सर्वपदवाक्यानां योनिभूतमाहुरध्यात्मविद इत्यर्थः । हृदि सम्प्रयुक्तमणुं द्व्यणुर्द्विरणुरिति यदि पाठस्तदा हृदि सम्प्रयुक्तमणु ततो द्व्यणोर्द्विरणुरित्यादि योज्य । इदानीं सर्वं शास्त्रार्थं विद्वत्प्रशंसाभिषणोपसंहरति "न पश्यन् ० सर्वशः" इति । एतस्मिन् शास्त्रे यत् तत्त्वं शाब्दब्रह्मणः परस्य च ब्रह्मणोऽनेकविधमुपपादितं तद्यथोक्तविधिनोपायोपेयभावेन पश्यन् स्वानुभवमापादयन् यो भवति स मृत्युं संसारं पुनर्न पश्यति न रोगं पश्यति व्याधिं न पश्यतीत्यर्थः । उत अपि दुःखतां दुःखमित्येतत् आधिमपि न पश्यतीत्यर्थः । देहद्वय-सम्बन्धाभावात्तदाधिव्याधिप्रसङ्गो जन्ममृत्युजरादिप्रसङ्गो वास्य सम्भवेदित्यर्थः । हि यस्मात् पश्यन ज्ञानी सर्वं पश्यति सर्वमाधिव्याध्यास्पदं विषयत्वेनानुभवति न स्वधर्मत्वेनेत्यर्थः । यदा पश्यन् हि ज्ञानी सर्वं सर्वात्मकं ब्रह्म पश्यति, अतः सर्वशः सर्वात्मना सर्वं ब्रह्माप्नोति ब्रह्मैव भवतीत्यर्थः । तस्मा

**न पश्यन् मृत्युं पश्यति न रोगं नोत दुःखतां ।**
**सर्वं हि पश्यन् पश्यति सर्वमाप्नोति सर्वशः ॥**
**चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात् परश्च यः ।**

---

यथोक्तविधिना परापरब्रह्मतत्त्वावधारणमेव परमपुरुषार्थ-साधनं परमानन्दाद्वयं ब्रह्मैवात्माभेदेनाविर्भूतं पुरुषार्थ इति सिद्धमित्युपसंहारार्थो योज्यः। यत् पुनरिन्द्रेन्द्राण्योः सुषुप्त तुरीयञ्च पदं वक्तव्यं सिद्धवत्कृतमित्युक्तं तदिदानीं प्रपञ्चयन्नो वेद्यतत्त्वमुपसंहरति "चाक्षुषः ० महात्मन इति" इति। यः पूर्वं पुरुषश्चाक्षुष इत्यादौ दक्षिणसव्याक्ष्णोरिन्द्रेन्द्राणी-रूपमिथुनात्मना जाग्रदवस्थाभोक्तात्मा निर्दिष्टः स इह चाक्षुष उच्यते। स एव हृदयनाडीसुषिरेषु सञ्चरन् वासनामय विषयद्रष्टा स्वप्नचारी भवति। उभयविधदर्शनवृत्त्युपरमे च सुप्तः सुषुप्तिं गतः स भवति। एवमेते त्रयस्त्रिमणामवस्थानां भोक्तारो विश्वतैजसप्राज्ञसंज्ञका उक्ताः। यश्च सुप्तात् परः शुद्ध आत्मा स उक्तविश्वाद्यात्मत्रयापेक्षया तुरीय उच्यते, एवमुक्तप्रकारेणास्य चिदात्मनो भेदाश्चत्वारः प्रसिद्धाः, तेभ्य स्तेषु मध्ये तेभ्यो वा विश्वादिभ्यो विश्वाद्यपेक्षया तुर्यं तुरीयं चतुर्थं पदं महत्तरमतिशयेन महदत्यन्तमपरिच्छिन्नमित्यर्थः। तुरीयस्य महत्तरत्वमुपपादयति, त्रिष्विति। त्रिषु जाग्रदा-दिषु स्थानेष्वेकपात् तुरीयाख्यं ब्रह्म चरेत् सर्वकल्पनाधि-ष्ठानत्वेनानुगतं वर्तत इत्यर्थः। त्रिपाद् ब्रह्म विश्वतैजस-

भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरं ।
विश्वैकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे ॥
सत्यान्टतोपभोगार्थाः* द्वैतीभावो महात्मनः। इति
द्वैतीभावो महात्मन इति ॥

प्राज्ञाख्यं उत्तरे उत्तरस्मिंस्तुरीये चरति तदाश्रित सद् वर्त्तत इत्यर्थः। एतदुक्तं भवति, कार्यं कारणमिति जगतोऽवस्थाद्वय प्रसिद्धं, तत्र काय स्थूलं सूक्ष्मञ्चेति द्विविधं, तयोः स्थूलकार्योपाधिर्विश्वः, सूक्ष्मकार्योपाधिस्तैजसः, एतयोः स्वस्वोपाधिपारतन्त्र्यात् तावन्मात्रपरिच्छिन्नाविति नैतौ महत्तरौ, कारणात्म्यजगद्बीजोपाधिस्तु प्राज्ञः सकारणस्य स्वोपाधेः कार्यव्यापित्वादवस्थान्तरमपि व्याप्नुवन् पूर्वापेक्षया व्यापक इति महान् भवति, एतत् त्रितयं येनानवच्छिन्नप्रकाशात्मना साक्षिणा भास्यते यत्सत्तया च सदिति व्यवह्रियते तत् तुरीयं कार्यकारणोपाधिद्वयरहितं परिच्छेदकाभावादपरिच्छिन्नं महत्तरमिति। तदुक्तं 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः' इति। तर्हि किं परिच्छिन्नापरिच्छिन्नरूपेणात्मभेदोऽङ्गीकृतो नेत्याह, सत्येति। सत्यमनिदं चिदात्मरूपं, अनृतं पराग्रूप मनस्त्रयात्मकतदभिमानिलक्षण, ताभ्यां परस्पराध्यस्ताभ्यामुपभोगो व्यवहारः सत्यानृतोपभोगः, स एवार्थस्तस्मात् तन्निमित्तं

* 'उपभोगार्थात्' इति समीचीनः पाठः।

## इति मैत्र्युपनिषदि सप्तमः प्रपाठकः ॥

## ॥ सम्पूर्णोऽयं ग्रन्थः ॥

---

महात्मनः पूर्णस्य ब्रह्मात्मनो द्वैतीभावो नानात्वं मायिकं न परमार्थमित्यर्थः । अभ्यास उपनिषत्समाप्त्यर्थः ॥ ० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीरामतीर्थविरचितायां मैत्र्युपनिषद्दीपिकायां सप्तमः प्रपाठकः समाप्तः ।

नमस्तस्मै भगवते रामायाकुण्ठमेधसे ।
येनान्तर्हृदयस्थेन नुद्यमानो विचेष्टये ॥
विचारयाम्यहं नित्यं वेदतत्त्वार्थमादरात् ।
येषामनुग्रहात् तेभ्यो गुरुभ्योऽस्तु नमःशतं ॥
मैत्रीशाखोपनिषदां दीपिकेयं महात्मनां ।
अन्तर्वस्त्ववभासाय भूयादार्केन्दुतारकं ॥

॥ ० ॥ सम्पूर्णः ॥ ० ॥

# सर्वोपनिषदर्थानुभूतिप्रकाशीय-

## दशमोऽध्यायः।

मैत्रायणीयनाम्नी या शाखा सा यानुषी मता।
तेषां शाकायन्यमुनिर्बोधयामास भूपतिं ॥ १ ॥
बृहद्रथः स्वस्य राज्ये पुत्रं संस्थाप्य निर्गतः।
वने महत्तपस्तप्त्वा विद्यार्थं मुनिमाययौ ॥ २ ॥
अशाश्वतं शरीरं मे कदा यायात् ततः पुरा।
शास्यास्यात्मानमात्मज्ञो मुनिर्मां बोधयिष्यति ॥ ३ ॥
इत्यभिप्रेत्य साष्टाङ्गं प्रणिपत्य भुवि स्थितः।
वृणीष्व वरमित्युक्तो वृतवानात्मवेदनं ॥ ४ ॥
राज्ञां भोगप्रधानानामात्मज्ञानं सुदुःशकं।
वृणीष्व कामानित्युक्तः स मुनेः पादमग्रहीत् ॥ ५ ॥
पादं स्वमूर्ध्नवस्थाप्य स्ववैराग्यं प्रकाशयन्।
आधारे करणे दोषानवोचद्भोक्तृभोग्ययोः ॥ ६ ॥
भोगाधिकरणं देहस्तस्य दोषा इमे स्फुटाः।
अस्थिचर्मस्नायुमज्जामांसशुक्रादयोऽखिलाः ॥ ७ ॥
बीभत्सा कारणस्त्वेषु सज्जता भुज्यते कथं।
विट्पूर्णखाते मग्नः सन् भुङ्क्ते कोऽपि न बुद्धिमान् ॥ ८ ॥

पुरा त्वविद्ययाऽऽच्छन्नदोषोऽहं भुक्तवांस्ततः ।
बालो विमुढो यत्किञ्चिदद्यादिष्टादिकं यथा ॥ ९ ॥
भोगाधिकरणे दोषा आसतां भोगसाधने ।
चित्तेऽपि बहवो दोषा वर्तन्ते हि निरन्तरं ॥ १० ॥
कामक्रोधौ लोभमोहौ विषादेर्ष्याभयादयः ।
ये सन्त्येतैर्ग्रस्तचित्ता भोगिनः किं सुखं भवेत् ॥ ११ ॥
श्रूयन्तां भोक्तृदोषाश्च भोक्तारो बहवो मताः ।
देहाभिमानिनो जीवा उत्तमाधममध्यमाः ॥ १२ ॥
दरिद्रा अधमाः ज्ञेया मध्यमाश्चक्रवर्तिनः ।
गन्धर्वाद्या उत्तमा स्युस्ते सर्वेऽपि चयिष्णवः ॥ १३ ॥
उत्पन्नध्वंसिनो यद्वत् स्युर्दंशमशकादयः ।
तथैव सर्वे भोक्तारो म्रियन्ते स्वायुषः क्षये ॥ १४ ॥
भोक्ता न म्रियते किन्तु देह एवेति चेच्छृणु ।
देहस्थस्यैव भोक्तृत्वं तन्नश्येद्वपुषा सह ॥ १५ ॥
दरिद्राणां भोगहेतुःश्रीर्भृत्याश्च न सन्त्यथ ।
सुद्युम्नप्रमुखानां ते विद्यन्ते चक्रवर्तिनां ॥ १६ ॥
इति चेत् सन्तु सर्वेषां मिषतामेव मध्यगः ।
म्रियते चक्रवर्ती तां सन्त्यज्य महतीं श्रियं ॥ १७ ॥
अन्तर्धानादिशक्तिश्च गन्धर्वादिषु विद्यते ।
विद्यतां ताम मृत्युस्तु तेषां शास्त्रेषु कथ्यते ॥ १८ ॥
भोक्तॄणां नश्वराणां को भोगः स्यान्मृत्युचिन्तया ।
शयानो भुवि नो कश्चिन्मुमूर्षुर्धनमिच्छति ॥ १९ ॥

तिष्ठत्वसौ भोक्तृदोषो भोग्येऽपि श्रूयतामयम् ।
अब्धिगिर्यादिकं सर्वं नश्वरं किमुतेतरत् ॥ २० ॥
दोषान् सोढ्वा सकृद्भुक्तः संसारो सत्स्यतीति चेत् ।
न, भोगैराश्रितस्यास्य संसारावृत्तिदर्शनात् ॥ २१ ॥
भोगकाले कृतं कर्म कुतो जन्म ददाति नो ।
अन्धकूपस्थितो भेक इवाहं सङ्गतिस्थितः ॥ २२ ॥
संसारकूपे पतितमस्मादुद्धर्तुमर्हसि ।
त्वमेव गतिरस्माकमन्या काऽपि न विद्यते ॥ २३ ॥
राज्ञोऽस्य तीव्रवैराग्यात् दृष्ट्वा मुख्याधिकारिताम् ।
तमाह कृतकृत्यस्त्वमात्मज्ञोऽसि न संशयः ॥ २४ ॥
यज्ञदानादि कृत्यं ते जातं विविदिषोदयात् ।
सफलं न पुनः कर्म कर्तव्यं तेऽत्र विद्यते ॥ २५ ॥
विषयासक्तिरेवास्य ज्ञानस्य प्रतिबन्धिका ।
एषा तु नास्ति ते ज्ञानं हस्तप्राप्तमिव स्थितम् ॥ २६ ॥
संसारहेयतां बुद्ध्वा त्यक्ते तस्मिन्नशेषतः ।
योऽवशिष्टो भाति सोऽयमेवात्मेत्यवगच्छ भोः ॥ २७ ॥
अवशिष्टो य आत्माऽसावहमित्येव गम्यते ।
मतभेदादहम्बुद्धिर्बह्व्यस्त्वत्र को भवेत् ॥ २८ ॥
देहः कर्ता च साक्षीति त्रयो वादिभिरीरिताः ।
आत्मानस्तेषु कतमो भवतोऽभिमतो वद ॥ २९ ॥
साक्ष्यात्माऽभिमतो मान्यौ तयोर्दोषास्त्वयेरिताः ।
संसारान्तःपातिनौ तौ न तयोरात्मतोचिता ॥ ३० ॥

साक्षुषव्यवहारेऽस्य भासकत्वेन साक्षिता ।
विवेक्तुं शक्यते तस्माद्‌चक्षुरुपाधौ समुच्यते ॥ ३१ ॥
देहमध्येऽस्ति हृत्पद्मं नाडीयुतमधोमुखम् ।
नाड्यस्तूर्द्ध्वमधश्चैतं देहं व्याप्य व्यवस्थिताः ॥ ३२ ॥
अहङ्कारोऽत्र चिद्युक्तः कर्ता भोक्ता हृदि स्थितः ।
मनोऽन्तःकरणं स्थित्वा हृदि वृत्त्या बहिर्व्रजेत् ॥ ३३ ॥
रश्मिवत्प्रसृता वृत्तिर्नाड्याप्नोत्यक्षिगोलकम् ।
अस्वतन्त्रा बहिश्चक्षुरिन्द्रियेण सह व्रजेत् ॥ ३४ ॥
वृत्त्यवच्छिन्नचैतन्यं घटाकाशवदेतया ।
वृत्त्या सह बहिर्गत्वा तत्राज्ञानं नुदेत् क्षणात् ॥ ३५ ॥
तद्वृत्त्यागमनात्पूर्वमज्ञानेन समावृतम् ।
बाह्यं जगत् तदज्ञानं तया वृत्त्याऽपसार्यते ॥ ३६ ॥
वर्तिनिष्ठो यथा दीपस्तमो नाशयते तथा ।
चैतन्यं वृत्तिनिष्ठं यत् तदज्ञानस्य नाशकम् ॥ ३७ ॥
एष हृन्निष्ठचैतन्यपदार्थोऽक्ष्णा बहिर्गतः ।
व्याप्नुवन् निखिलं तत्र व्यथा नाप्नोति काञ्चन ॥ ३८ ॥
प्रतिकूलात् तु विषयाद्या व्यथा सा तु मानसी ।
न चैतन्यगतेत्येवमाचार्याः स्पष्टमब्रुवन् ॥ ३९ ॥
दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् ।
दुःखिनः साक्षिता नैवं साक्षिणो दुःखिता तथा ॥ ४० ॥
नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ।
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ ४१ ॥

यः साक्षी चित्पदार्थोऽसौ जीवात्मा तस्य जीवता ।
अहङ्कारेण तादात्म्यभ्रान्त्यैव परिकल्पिता ॥ ४२ ॥
बोधयित्वा जीवतत्त्वं जीवस्य ब्रह्मरूपताम् ।
बोधयामास सोऽप्यात्मा स्वेन रूपेण तिष्ठति ॥ ४३ ॥
आत्माऽहङ्कारदेहाभ्यां युक्तः कलुषितः पुरा ।
विवेचितः स्थूलदेहादीषदेव प्रसीदति ॥ ४४ ॥
अहङ्कारादिविक्तश्चेत् तदा सम्यक् प्रसीदति ।
आधिव्याध्यास्यकालुष्यं न चिन्मात्रेऽस्ति किञ्चन ॥ ४५ ॥
एष साक्षी सम्प्रसादो देहद्वयसमुत्थितः ।
शास्त्रसिद्धं परं ब्रह्म ज्योतिः प्राप्नोति वाक्यतः ॥ ४६ ॥
मत्तोऽन्यद्ब्रह्म परमं स्वप्रकाशमिति भ्रमः ।
पुरासीत् तत्त्वमस्यादिवाक्येनासौ निवर्तते ॥ ४७ ॥
अब्रह्मत्वभ्रमापाये ज्योतिःप्राप्तिरितीर्यते ।
ततोऽयं ब्रह्मणा स्वेन रूपेण व्यवतिष्ठते ॥ ४८ ॥
एवं व्यवस्थिते योऽसावात्माऽनुभवगोचरः ।
स एव स्मृतिभीत्यादिरहितं ब्रह्म नेतरत् ॥ ४९ ॥
श्रवणं मननं ध्यानं विद्यायाः साधनत्रयं ।
अज्ञानं संशयो भ्रान्तिरित्येतेषां निवर्तकम् ॥ ५० ॥
गुरूपदेशश्रवणादज्ञानं विनिवर्तते ।
उपपत्तिपरामर्शात् संशयानां निवर्तनम् ॥ ५१ ॥
निरन्तरध्यानतस्तु नश्यति भ्रान्तिवासना ।
राजंस्ते श्रवणं जातं मननं कुरु यत्नतः ॥ ५२ ॥

प्रमाणे सम्प्रदाये वा तत्त्वे वा संशयो भवेत् ।
उदितेऽनुदिते वेति होमः शाखादिकल्पितः ॥ ५३ ॥
न तथा ब्रह्म विज्ञेयं सर्वोपनिषदीरणात् ।
न प्रमाणे संशयोऽतः सम्प्रदायेऽपि नास्त्यसौ ॥ ५४ ॥
शाखाप्रवर्तको मैत्रो मह्यमाह न चापरः ।
सोऽपि किञ्चिदुपाख्यानमुदाहृत्य ममाब्रवीत् ॥ ५५ ॥
तत्त्वस्य संशयोऽपैति तदाख्यानमिदं शृणु ।
मुनयो वालखिल्या ये ते प्रजापतिमब्रुवन् ॥ ५६ ॥
अचेतनं शरीरं तत् केन चेतनवत्कृतम् ।
प्रेरको वाऽस्य को ब्रूहीत्युक्तः प्रत्यब्रवीदसौ ॥ ५७ ॥
वेदानामुत्तरे भागे श्रूयते परमेश्वरः ।
स करोत्युभयं तस्य तात्त्विकं रूपमुच्यते ॥ ५८ ॥
अज्ञानमिश्रणाभावाच्छुद्धः पापविवर्जनात् ।
पूतो रूपेण नाम्ना च हीनत्वाच्छून्यमुच्यते ॥ ५९ ॥
शान्तः क्रोधादिराहित्यादप्राणोऽचेष्टकत्वतः ।
ईशत्वोपाधिराहित्यादनीशात्मा स्वतो भवेत् ॥ ६० ॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ६१ ॥
देशात् कालाद्वस्तुतश्च परिच्छेदविवर्जनात् ।
अनन्तोऽपचयाभावादक्षय्योऽचलनात् स्थिरः ॥ ६२ ॥
नित्यस्फूर्त्या शाश्वतोऽयमजो जन्मादिवर्जनात् ।
स्वतन्त्रो न पराधीनः स्वमहिम्न्येव तिष्ठति ॥ ६३ ॥

महिमाऽऽस्वयंरूपत्वादखण्डैकरसात्मना ।
आधारान्तरराहित्यात् स्थितिरत्रोपचर्यते ॥ ६४ ॥
अनिच्छस्येदृशस्यैतद्देहनिर्वहणं कथम् ।
इति चेत् स्वांशरूपेण देहेऽवस्थाय निर्वहेत् ॥ ६५ ॥
स एवोक्तो देहसाक्षी विद्वद्भिरनुभूयते ।
नेतरैः सूक्ष्मरूपोऽयमिन्द्रियाविषयत्वतः ॥ ६६ ॥
पूर्णत्वात् पुरुषाख्योऽसौ देहे स्वांशेन वर्तते ।
बुद्धिपूर्वं यथा सुप्तः स्वेच्छया प्रतिबुध्यते ॥ ६७ ॥
अध्यापकः प्रदोषेषु मध्यरात्रे च बुध्यते ।
स्वेच्छया परमात्मापि तथाचांशेन वर्तताम् ॥ ६८ ॥
प्रतिदेहं तु चिन्मात्रो घटाकाश इव स्थितः ।
देहं साक्षितया जानन् क्षेत्रज्ञ इति कथ्यते ॥ ६९ ॥
सङ्कल्पाध्यवसायाभिमानैरेषोऽनुमीयताम् ।
सर्वैरचैरूपेतत्वात् सङ्कल्पाद्यस्य सम्भवेत् ॥ ७० ॥
तेनावच्छिन्नचैतन्यरूपेणेदं वपुस्तथा ।
चेतनीकृत्य कार्येषु प्रेर्यतेऽश्वैर्यथा रथः ॥ ७१ ॥
अखण्डैकरसस्यांशो नेति चेच्छ्रूयतामिदम् ।
अखण्डैकरसात्मैव माययेश्वरतामगात् ॥ ७२ ॥
मायाया अनृतत्वेन नाखण्डत्वं निरुध्यते ।
मायायां स्वच्छरूपायामात्मासौ प्रतिबिम्बति ॥ ७३ ॥
तदुपाधिक ईशोऽभूत्सृष्टेः प्रागेक एव सः ।
अतो नारमतैकाकी राजाऽमात्यादिको यथा ॥ ७४ ॥

द्यूतक्रीडाभिवेशोऽसौ सृष्टिक्रीडामवैक्षत ।
द्रव्यान्तरमुपादानमदृष्ट्वा स व्यचारयत् ॥ ७५ ॥
बहु स्यामहमेवात्र प्रजारूपीति चिन्तयन् ।
देहानसृजत स्थूलान् पाषाणप्रतिमा इव ॥ ७६ ॥
स्वयमेव यथा स्वप्ने गिरिनद्यादिरूपतः ।
कल्पितो भात्यसावात्मा भात्येवं बहुरूपतः ॥ ७७ ॥
ज्ञानक्रियाशक्तिहीना देहाः क्रीडार्थमक्षमाः ।
इत्यालोच्य क्रियाशक्तिः प्राणो भूत्वाऽन्तराविशत् ॥ ७८ ॥
श्वासाधोगत्यन्नसाम्योद्गारादिव्याप्तिसिद्धये ।
पञ्चधा व्यभजत् प्राणं प्राणोपाधिक ईश्वरः ॥ ७९ ॥
उपांश्वन्तर्यामसंज्ञौ ग्रहौ द्वौ सोमयाजिनः ।
नियतौ तद्वदुच्छ्वासनिःश्वासौ प्राणिनामपि ॥ ८० ॥
लोहकारः स्वहस्ताभ्यां पर्यायेण दृतिद्वयात् ।
वह्निं ज्वालयते यद्वज्जाठरो ज्वाल्यतेऽनलः ॥ ८१ ॥
निश्वासोच्छ्वाससंदीप्तो भुक्तं पाचयतेऽनलः ।
ईशस्य जाठराग्नित्वाकारो भगवतेरितः ॥ ८२ ॥
'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' ॥ ८३ ॥
कर्णौ पिधाय घोषं यं शृणोत्यन्तः स जाठरात् ।
वह्नेर्जातो मुमूर्षुस्तु नैनं घोषं शृणोति हि ॥ ८४ ॥
अक्षणोपेतः पञ्चविधः प्राणो लिङ्गाभिधं वपुः ।
प्राणोपाधिकचिद्रूपो ज्ञानशक्त्यापि युज्यते ॥ ८५ ॥

ततो मनोमयो भूत्वा सत्यसङ्कल्पतां व्रजेत् ।
यत् सङ्कल्पयते जीवस्तत् करोत्येव सर्वथा ॥ ८६ ॥
हृदि स्थितोऽसौ शब्दादीन् भुञ्जेऽहं विषयानिति ।
सङ्कल्प्याक्षाणि सृष्ट्वा तैर्भुङ्क्तेऽक्षविषयान् सदा ॥ ८७ ॥
देहो रथः पञ्च हयास्तस्य कर्मेन्द्रियाणि हि ।
ज्ञानेन्द्रियाणि यानि स्युस्तानि बन्धनरज्जुवत् ॥ ८८ ॥
मनोऽत्र सारथिः सर्वैरवच्छिन्नेश्वतां व्रजेत् ।
चिदात्मा चेतनं देहं कृत्वा प्रेरयते सदा ॥ ८९ ॥
तस्यापाये मृतो देहोऽचेतनो न प्रवर्तते ।
चिदंशस्य प्रेरकत्वं ब्रवीति भगवान् स्फुटम् ॥ ९० ॥
'ममैवांशो जीवलोके जीवभूतः सनातनः
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' ॥ ९१ ॥
अवच्छिन्नश्चिदात्मासौ स्वतो नेच्छति किञ्चन ।
न भुङ्क्ते सुखदुःखं च तस्मिन् नारोप्यतेऽखिलम् ॥ ९२ ॥
सर्वेष्वपि शरीरेषु भाति तद्धर्मवानिव ।
न तिष्ठति स्वतस्तेषु नापि तद्धर्मसंयुतः ॥ ९३ ॥
ज्ञानेन्द्रियैर्न दृश्योऽयं ग्राह्यः कर्मेन्द्रियैर्न च ।
स्वरूपसौक्ष्म्यादव्यक्तो वेदान्तैरवबुध्यते ॥ ९४ ॥
निर्ममत्वात् सर्वगोऽपि शरीरेषु च तिष्ठति ।
अकर्ताऽप्यनभिज्ञैस्तु कर्तेवासौ विभाव्यते ॥ ९५ ॥
वेदानामुत्तरे भागे इत्यादिग्रन्थवर्णितम् ।
आत्मनो वास्तवं रूपं कर्तृत्वं नास्य विद्यते ॥ ९६ ॥

स सर्वोपनिषत्सिद्ध एष हृद्युपलभ्यते ।
शुद्धः स्थिरोऽचलो नास्य कर्मलेपोऽस्ति कश्चन ॥ ९७ ॥
अव्यग्रो निस्पृहस्तूष्णीमुदासीन इव स्थितः ।
स्वस्थो विक्षेपराहित्यादित्यात्मानं प्रपश्यत ॥ ९८ ॥
ईदृशोऽप्यज्ञदृष्ट्याऽसौ सत्त्वादिगुणधारिणा ।
मायापटेन सञ्छन्नो भुञ्जान इव लक्ष्यते ॥ ९९ ॥
इत्थं बोधितवानेष वालखिल्यान् प्रजापतिः ।
तत्त्वं बुद्ध्वाऽथ पप्रच्छुः कः संसारीति ते गुरुम् ॥ १०० ॥
श्रूयतां परमात्मोक्तस्तस्मादन्योऽस्ति कश्चन ।
भूतात्माख्यो निकृष्टोऽयं पुण्यपापफलैर्युतः ॥ १०१ ॥
विप्रक्षत्त्रादिसद्योनिं श्ववराहादिकामपि ।
असद्योनिमवाप्नोति भूलोके जन्म चेत् तदा ॥ १०२ ॥
अन्यत्र जन्म चेत् तर्हि पुण्येन स्वर्गमश्नुते ।
पापेन नरकं द्वन्द्वैरभिभूतः परिभ्रमेत् ॥ १०३ ॥
मानावमानौ शीतोष्णौ द्वन्द्वानीत्यादिकानि हि ।
यो भूतात्मोदितः सोऽथ विस्पष्टमभिधीयते ॥ १०४ ॥
अपञ्चीकृतभूतैर्यज्जातं सूक्ष्मवपुर्हि तत् ।
भूतैः पञ्चीकृतैर्जातं यत् तत् स्थूलमिदं वपुः ॥ १०५ ॥
ज्ञानाक्षाणां क्रियाक्षाणां वायूनां पञ्चकत्रयम् ।
मनोऽहङ्कार इत्येवं लिङ्गं सप्तदशात्मकम् ॥ १०६ ॥
अहङ्कारे भौतिके यच्चैतन्यं प्रतिविम्बितम् ।
स भूतात्माऽथ चिद्बिम्बं निर्लेपं ब्रह्म कथ्यते ॥ १०७ ॥

भूतात्मा प्रकृतेर्जातैर्गुणैरेषोऽभिभूयते ।
तमोगुणाभिभूतत्वात् स्वात्मस्थं ब्रह्म नेक्षते ॥ १०८ ॥
अधिष्ठानतया ब्रह्म भूतात्मन्यपि तिष्ठति ।
पद्मपत्रे नीरबिन्दुरश्लिष्टो वर्तते यथा ॥ १०९ ॥
ईदृशोऽपीश्वरो मायायुक्तः सन् प्रेरयत्यमुं ।
भूतात्मानं स भूतात्मा विविनक्तीश्वरं न तम् ॥ ११० ॥
सुखैर्वैषयिकैः सत्त्वगुणोद्भूतैः प्रहृष्यति ।
उद्रेके रजसः सोऽयं कलुषीक्रियते भृशम् ॥ १११ ॥
तदानीं मतिचाञ्चल्यात् लुप्यते स्वखिलात् फलात् ।
कृषिं प्रक्रम्य तां त्यक्त्वा तपः कुर्वंस्त्यजेदृढः ॥ ११२ ॥
तत्तत्फले सस्पृहत्वाद् व्यग्रो नाप्नोत्यसौ फलम् ।
अहङ्कारेण बद्धः स्यात् जालेन विहगो यथा ॥ ११३ ॥
संसारभ्रमणं तस्य प्रोक्तं शास्त्रान्तरेष्वपि ।
करणप्रेरकः कर्ता भूतात्मा संसरत्ययम् ॥ ११४ ॥
चैतन्येन हि पूर्णेन सोऽन्तर्व्याप्तस्ततश्चितिः ।
अध्यारोपेण संसारस्तथासौ न तु वास्तवः ॥ ११५ ॥
दृष्टान्तोऽत्राऽग्निना व्याप्तो लोहपिण्डोऽभिधीयते ।
तप्तलोहं मुद्गरेण हतं बहुविधं भवेत् ॥ ११६ ॥
अहङ्कारे चिदाभासो भूतात्मा साक्षिभासितः ।
हन्यमानो गुणैः सत्त्वादिभिर्बहुविधो भवेत् ॥ ११७ ॥
यज्जन्म योनिलक्षाणां भवेत् चतुरशीतिषु ।
सोऽयं बहुविधो भावो लोहे दारुकुठारवत् ॥ ११८ ॥

कुलालेन यथा चक्रं तथा मायाविना गुणाः ।
सत्त्वादयः प्रेरिताः स्युस्तैश्च जन्मान्यनेकधा ॥ ११९ ॥
लोहे मुद्गरघातेन नाग्नेर्बाधस्तथा गुणैः ।
भूतात्मोपद्रवेणास्य साक्षिणो नास्त्युपद्रवः ॥ १२० ॥
एकैकदेहो नरको भवेत् भूतात्मनो महान् ।
मैथुनोद्भूत्यादिदोषाः प्रसिद्धा एव देहिनां ॥ १२१ ॥
देहे दोषा यथा चित्ते दोषास्तद्वदनेकशः ।
सम्मोहाद्यास्तामसाः स्युस्तृष्णाद्या राजसा मताः ॥ १२२ ॥
भूतात्मा तैः प्रेरितः संस्तैस्तैस्तामसराजसैः ।
कर्मभिर्बहुधा देहानवाप्नोति पुनःपुनः ॥ १२३ ॥
श्रुत्वा संसारिणं वालखिल्या विस्मयमाययुः ।
संसारस्य प्रतीकारं पप्रच्छुर्मुनयः पुनः ॥ १२४ ॥
शाम्येद्भूतात्मता येन चिदात्मत्वं तु शिष्यते ।
तमुपायं गुरो ब्रूहीत्युक्तः सन् गुरुरुक्तवान् ॥ १२५
नद्यूर्म्यादिकदृष्टान्तैः संसारस्याप्यनिष्ठतां ।
मिथ्यात्वं च विनिश्चित्य व्रजेत् ज्ञानाधिकारिताम् ॥ १२६ ॥
या वेदेनोदिता विद्या सा भूतात्मप्रतिक्रिया ।
तपो योगः स्तुतिर्बोधश्चोक्तं वेदे चतुष्टयम् ॥ १२७ ॥
स्वाश्रमोचितधर्मो यः स एवास्य तपो भवेत् ।
शान्ताः स्युर्मोहतृष्णाद्यास्तेन तामसराजसाः ॥ १२८ ॥
तच्छान्तौ सत्त्ववृद्धिः स्यात् सत्त्वेनैकाग्रता धियः ।
तयाऽऽत्मतत्त्वानुभवस्ततो मुक्तो न संसरेत् ॥ १२९ ॥

निरिन्धनाग्निवत् चित्तं शाम्येद्योगेन कारणे ।
संस्कारमात्रशेषत्वात् न धीः समतमर्हति ॥ १३० ॥
तदानीं जीवचैतन्यं ब्रह्मण्यैकीभवेद्यथा ।
जले जलं बह्निरग्नौ व्योम्नि व्योम स्थितं तथा ॥ १३१ ॥
अद्वैतमनुभूयास्मिन् समाधौ व्युत्थितः पुनः ।
स्तुवन् सर्वात्मतां तस्य ब्रह्मणोऽनुस्मरेत् सदा ॥ १३२ ॥
कुत्सो मुनिर्यथाऽस्तौषीत् त्वं ब्रह्मेत्यादिना तथा ।
स्तुवन्नपनुदेद्द्वैतवासनां चिरमाश्रिताम् ॥ १३३ ॥
योगादद्वैतविज्ञाने वासनायाश्च सङ्क्षये
सन्त्यज्य जीवताभ्रान्तिं परमात्मत्वमाप्नुयात् ॥ १३४ ॥
सा भ्रान्तिस्तमसा जन्या तमस्त्वाश्रितमात्मनि ।
परमात्मत्वमावृत्य कल्पयेत जीवताभ्रमम् ॥ १३५ ॥
यदावरकमज्ञानमात्माऽस्मिन् प्रतिबिम्बति ।
ईश्वरः प्रतिबिम्बोऽसौ सृष्ट्यादीनां प्रवर्तकः ॥ १३६ ॥
यदज्ञानं विक्रियते भवत्येष तमोगुणः ।
दृश्यमानं जगदिदं तम एवाभवत् पुरा ॥ १३७ ॥
ईशेन प्रेरितं तत् स्याद्रजो जलतरङ्गवत्
रजोऽपि प्रेरितं तद्वत् सत्त्वमेवं गुणात्रयम्* ॥ १३८ ॥
समष्टिरूपोऽहङ्कारः सत्त्वात् सारः समुद्गतः
चिद्बिम्बप्रतिबिम्बाभ्यां युक्तोऽसौ चेतनो भवेत् ॥ १३९ ॥
प्रतिदेहं व्यष्टिरूपः चेतनत्वेन तिष्ठति ।

*गुणात्रयमिति पाठान्तरं ।

सङ्कल्पोऽध्यवसायश्च देहे तत्तत्त्वसाधकः ॥ १४० ॥
हिरण्यगर्भो वेदेषु समष्टिव्यष्टिरूपधृक् ।
श्रूयते यः स सूत्रात्मा प्रजापतिरिहोदितः ॥ १४१ ॥
तस्य श्रेष्ठास्त्रयो देहाः सृष्ट्यन्तस्थितिहेतवः ।
ब्रह्मा रुद्रो विष्णुरिति गुणत्रयसमुद्भताः ॥ १४२ ॥
यो यत् सृजति लोकेऽस्मिन् ब्रह्मा तत्राभिमन्यते ।
नाशाभिमानी रुद्रोऽयं विष्णुः स्थित्यभिमानवान् ॥ १४३ ॥
प्रजापतिस्त्रिधा भूत्वा भूयोऽपि बहुधाऽभवत् ।
वसुरुद्रादित्यभेदैर्गिरिनद्यादिभेदतः ॥ १४४ ॥
आत्मन्यध्यारोप एवं प्रोक्तो मायाविनिर्मितः ।
आत्माऽधिष्ठानरूपेण प्रविष्टः सर्ववस्तुषु ॥ १४५ ॥
इत्थं विवेचितश्चात्मा भात्याधिक्येन पालकः ।
नाधिष्ठानं विना किञ्चिदारोप्यं बाध्यते क्वचित् ॥ १४६ ॥
आरोपितस्य सर्वस्याधिष्ठानं तत्त्वमीच्यते ।
तस्मादन्तर्बहिश्चात्मा स्थितः सर्वेषु वस्तुषु ॥ १४७ ॥
प्रजापतिर्वालखिल्यान् मुनीनेवमबूबुधत् ।
शाकायन्यः कथामेतां राज्ञे प्रोवाच धीमते ॥ १४८ ॥
वैराग्य परमात्माऽत्र जीवात्मा साधनानि च ।
तपो योगः स्तुतिर्बोध इति सर्वं व्यवस्थितम ॥ १४९ ॥
शाकायन्याय भगवान् मैत्रोऽखिलमुवाच ह ।
तत् सर्वमनुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १५० ॥

इत्यनुभूतिप्रकाशे मैत्रायणीयोपनिषद्विवरणे दशमोऽध्यायः ।

# THE MAITRI UPANISHAD.

## RĀMATIRTHA'S INTRODUCTION.

"THIS is verily the Brahman sacrifice." Thus commences the Upanishad of the Maitrāyaṇas. The following is its connection vith the former (or ceremonial) portion of the Veda. Although n that previous portion, consisting of four books, a number of eremonies, beginning with the Agnihotra, have been enjoined, and described as producing their higher or lower fruit, still these lo not result in the highest end of man, for they all have an end which is to be produced, and whatever can be produced is ransient—according to the law, "whatever is capable of being nade is transient." Thus there is a sacred text (Sruti), "As in his life the enjoyment obtained by works passes away, so ereafter the enjoyment obtained by merit passes away." (Chhāndogya Upan. viii. i. 6.); and again, "Whatever great meritorious ork he here performs, who knows not thus, it all at the last asses away" (Bṛihad Āraṇyaka Upan. i. 4. 15.); and again, Whosoever, O Gārgī, not knowing this indestructible being, ffers oblations in this world, performs sacrifices, and practises usterities for many thousands of years, it all comes to an end." Bṛihad Āraṇyaka Upan. iii. 8. 10.) Now the Veda intends to hew to the man who desires an end which is in its own nature ernal and admits of no augmentation, the means for the accomplishment of his object. But, seeing that in the case of one hose internal organ is filled with the impressions of countless bjects which have been experienced in the endless succession of ast births, and who by his subjection to these impressions is led

to continued activity, and whose mind is still set on external objects, it is impossible at once to turn him back from his external pursuits, and, after awaking in him a desire for the knowledge of the real nature of the individual soul as the means to the manifestation of the highest joy and that total cessation of ignorance which is man's highest good,* thus to lead him to the knowledge of the Supreme Soul, it at first teaches him outward ceremonies only as the means to attain the end of man. But after that a devotion to these has been produced, and the mind of the devoted worshipper has been gradually cleared by the performance of incumbent and voluntary ceremonial works, and has been completely purified by their subsequent performance, without any desire for selfish results, under the idea of surrendering them to Iśwara,—when he has attained to a clear discrimination between the eternal and the non-eternal, and is void of all desire for the enjoyment of the present or the hereafter,—when he is possessed of all the means, such as passionlessness, self-restraint, &c., and has no desire but final emancipation,—then, seeing that he is a worthy recipient, the Veda makes him know Brahman as the real individual Soul by rejecting all its falsely-ascribed attributes; and when, by thus knowing it, he is himself merged in the Soul, he attains to the recognition of that supreme oneness of the Brahman-soul, the sole essence of which is true knowledge and endless joy. Thus is the connection established between the earlier and latter portions of the Veda, since that portion which treats of ceremonial works is the means, and that which treats of the knowledge of Brahman is the end; and at the same time we have shewn† the

* Both the Calcutta MSS. read *vishayapravanatāparāvartanenāparamapurushā-* &c., which I endeavoured to make into sense by an adverbial construction, *āparamapurushārtharūpāvidyānivritti*, but the British Museum MS. has the true reading,-*parāvartanena paramapurushārtharūpāvidyānivrittiparamānanda-* &c.

† These are the four so-called *anubandhas*, *scil.* the *sambandha*, the *vishaya*, the *prayojana*, and the *adhikārin*.

object-matter, the purpose, and the proper subject of this latter portion which we are about to explain. Since, then, the object of this treatise, the knowledge of the soul, cannot be attained by the evidence of the other Vedas, and it is self-evident that it is to be accomplished by the treatise now about to be explained, we will now proceed, to the best of our ability, to explain its meaning word by word. In the former portion the various ceremonial works, as laying the sacred fire, &c., have been described, and this is common to all the Soma sacrifices besides the Agnishtoma;* therefore all the ceremonial works are considered as included in this; and so the Śruti proceeds to shew that all ceremonial works, inasmuch as they contribute to produce the knowledge of the Supreme Soul, are themselves indirect causes of the highest end of man.

* The *agnichayana*, or ceremony of arranging the fireplace for a sacrifice, is an essential preliminary for all *ishṭis* and *darśahomas*; but as it is also, under certain circumstances, an integral part of the *yajnakratus* or soma-offerings, i.e. the *agnishṭoma*, *uktha*, *shoḍaśin*, and *atirātra*, it may be called the representative of all sacrificial rites.

# THE MAITRI UPANISHAD.

---

## FIRST CHAPTER.

THIS is verily the Brahman sacrifice,*—the laying of the fire (and whatever else) of the former works† (has been declared). Wherefore let the sacrificer, having laid these fires, meditate on the Soul.‡ Thus of a truth doth the sacrifice become complete and perfect in all its parts. Who is this that is to be meditated on? He who is called the vital air (Prāṇa).§ Of him follows the story. (1)

Verily once a king, by name Bṛihadratha,‖ regarding this body as transitory, and having ceased to feel all desires, established his son in his empire and went forth into the forest. There practising the greatest penance, he stands, with arms uplifted, gazing at the sun. At the end of a thousand days¶ came unto him, like a fire without smoke, burning as it were with

* The Brahman-Sacrifice, or sacrifice to Brahman, is properly one of the five mahāyajnas, i.e. reading and teaching the Veda. See Manu, iii. 70. Āśwal. Gṛihya Sūt. iii. 2. Taittirīya Ārany. ii. 10, 11. The meaning here is that all the former ceremonial works are to be considered as modes of worshipping the Supreme Soul.

† The Scholiast says that, in the Maitrāyanī Śākhā, the first book of the Karma Kāṇḍa treats of the Agnichayana. All the works before enjoined are now to be performed without any thought of recompense, the sacrificer giving them over to the Supreme Being. Cf. Bhag. Gītā, v. 10.

‡ I.e. let him meditate on the individual soul as identical with the Supreme.

§ "That which breathes by the breath is thy soul, which is within every being." Brihad Āraṇyaka Up. iii. 4.

‖ There are several kings of this name in Hindu tradition. See Indische Stud. i. p. 275.

¶ Another reading is, "a thousand years."

splendour, the knower of the soul, the adorable son of Śākāyana. He said to the king, "Rise, rise, choose a boon." He made his obeisance, and answered, "Oh adorable one, I know not the soul; we have heard that thou knowest its nature, teach it unto us." "Of olden time was this thing which thou askest accomplished, but now it is hard to be attained; oh son of Ikshwāku, choose other desires"; thus spake the son of Śākāyana. Touching the sage's feet with his head, the king then recited this song.* (2)

"Oh adorable one, in this stinking unsubstantial body, a mere mass of bones, skin, sinews, marrow, flesh, semen, blood, mucus, tears, rheum, ordure, urine, bile, and phlegm, what have I to do with the enjoyments of desires? In this body assailed by desire, wrath, greed, delusion, fear, sorrow, jealousy, separation from the loved, union with the unloved, hunger, thirst, old age, death, disease, emaciation, and the rest, what have I to do with the enjoyments of desires? (3)

"And all this (body) we see to be perishing, just as these gad-flies, gnats, &c., or the grass and trees, for they all alike are produced and destroyed.† But why talk of these? There are others higher,—mighty archers, emperors in ancient time. Sudyumna, Bhūridyumna, Indradyumna, Kuvalayāśwa, Yauvanāśwa, Vadhryāśwa, Aśwapati, Śaśabindu, Hariśchandra, Ambarīsha, Nanaktu, Saryāti, Yayāti, Anaraṇya, Ukshasena ‡

* Gāthā is properly a verse used in a religious ceremony, but not taken from the Vedas; it is also employed in Buddhist literature as the name of those poetical legends in barbarous Sanskrit, which alternate with the prose account in the Vaipulyasūtras. Here, however, it seems only used to mean rhetorical prose.

† The Commentator draws this out into a regular syllogism. I may add here that the word *vimata* in p. 9, l. 11, is a technical name for the minor term in an argument,—unless there be a dispute as to the connection of the minor with the major, why have recourse to any middle term to prove it? Instead of *vimata* we have *vivādapada* in the Sarva Darś. Sangraha, p. 123, l. 7. Cf. *ibid.* p. 82, l. 1. So *vivādāspada* in the Sānkhya Prav. Bh. p. 28, l. 18.

‡ Dr. Weber (Ind. Stud. i. p. 277) quotes Mahābh. xii. 906—1042, to illustrate this list.

and the rest, or again, kings like Marutta,* Bharata and such as they. While all their kindred were yet looking on, they left their mighty glory and passed away from this world to the next. But why talk of these? There are others higher still—gandharvas, asuras, yakshas, rākshasas, bhūtas, gaṇas, piśāchas, snakes and vampires,† and the rest: these too we see destroyed. But why talk of these? There are others higher yet—the great oceans are dried up, the mountains fall, the pole star moves from its place,‡ the wind cords § (of the stars) are cut; the earth is submerged, and the heavenly beings depart from their homes. In such a world as this what have I to do with the enjoyments of desires? yea, even if one were fed therewith to the full, he must still return to earth again and again. Wilt thou therefore deign to deliver me? I am here in this world as a frog in a well without water. Oh adorable one, thou art our refuge, thou art our refuge!" (4)

---

## SECOND CHAPTER.

THEN, well pleased, the adorable son of Śākāyana || spake unto the king, "Oh king Bṛihadratha, the banner of the race of Ikshwāku, thou hast speedily attained thy desire and knowest the Soul; thou art renowned far and wide by the name of the wind.¶ This soul whom thou seekest is thine own." "Oh adorable one, which soul meanest thou?" He then thus addressed him.(1)

* For his legend, see Śatap Br. xiii. 5 4. 6

† Grahas are properly imps, which seize children: their chief is Pūtanā, the presiding deity of convulsions.

‡ "*Dhruvasya prachalanam*" probably only refers to a pralaya; then even the "never-ranging pole-star' is forced to move

§ See Wilson's Vishnu Purāna, p. 230, "All the celestial luminaries are in fact bound to the polar star by aerial cords," (i e. the winds, Pravaha, &c.) Cf. Aristotle's ἐνδεδεμένα ἄστρα. (De Coel. 2.)

|| The dialogue between Bṛihadratha and Śākāyanya goes on till vi. 30.

¶ The Schol. interprets this as implying that he will be called either

"That which, without ceasing the breathing,* mounts up to the subtil body (in sleep) and wandering in various directions and yet wandering not,† dispels the darkness of illusion,—that is the soul. Thus said the adorable Maitri."

Thus the sage spake to the king. "And again that which perfectly calm (in sound sleep), having risen above both these bodies,‡ attains to the supreme Light and appears in its own proper nature—that is the soul;" thus spake the sage,—"This is the immortal and the unfearing, this is Brahman." (2)

"Of a truth, oh king, this is the knowledge of Brahman, and the knowledge of all the Upanishads, as taught to us by the adorable Maitri; § I will tell it unto thee. There were certain saints, known in the Śruti by the name Vālakhilyas,|| pure from all sin, [illegible] in might, and with all their passions under subjection. Once on a time they thus spake to the Prajāpati Kratu.

Pṛishadaśwa, which he interprets as "he that has great horses," a name of the wind nearly equivalent to Bṛihadratha; or Jagatprāṇa "the soul of the world," (Du Perron has "magnitudo tua celebris est.") Pṛishadaśwa however properly means, "he who has for his horses deer flecked with white spots" (Sāyaṇa, ad Ṛigv. i. 87. 4.) Bṛihadratha is called Marut, *infra*, vi. 30.

* In sleep the senses are absorbed in the soul, but the vital airs remain awake, see Praśna Upan. iv. 2, 3. Another interpretation reads āvishṭambhanena for avisht—, "that which, hindering the vital air from departing out of the body, (i.e. keeping the body alive,) mounts upward (from the heart and pervades the body), and, though itself unchanged, assuming the form of various objects (sound, &c., as the hearer, &c.) makes objects manifest—that is the Soul."

† Experiencing the changes of the mind as affected by various impressions, and yet being in reality unmoved.

‡ By the absorption of both bodies, the gross and the subtil, the impurity contracted from contact therewith is destroyed.

§ Maitri, the first proclaimer of this Śākhā, *etat-śākhā-pravaktā*. The Anubhūti-prakāśa calls him Maitra.

|| For the Vālakhilyas see Prof. Müller's Rig-Veda transl. pref. p. xxxiv. The Vishṇu Purāna, i. 10, makes them the sons of Kratu by his wife Sannati, and describes them as "the 60,000 pigmy sages, no bigger than a joint of the thumb, chaste, pious, resplendent as the rays of the sun." The Rāmāyaṇa (iv. 40.) places them on the Saumanasa peak of the Udaya-parvata.

'Oh adorable one, this body is without intelligence like a cart; to what being, then, imperceptible to the senses, belongs that power by which it is yet made to appear intelligent, and who is the mover thereof? Oh adorable one, tell us what thou knowest.' He thus answered them. (3)

"He who is described in the Śruti as abiding above all, like the ascetics untouched amidst sensible objects,*—he is this stainless one, the purifying, the undeveloped, the tranquil, the unbreathing, the unthinking,† the undying, the indestructible, the unchangeable, the eternal, the unborn, the self-dependent; he abides in his own greatness;—by him is this body made to appear intelligent and he is the mover thereof." They said, "Oh adorable, how by such an one, abiding aloof, can this body be made to appear intelligent, and how is he the mover thereof?" He thus answered them. (4)

"Verily this subtil incomprehensible imperceptible one, named the Spirit, dwells in part in the body without volition;‡ just as one in sleep awakes without his volition, even so it is here. This part of the Soul is verily He, who is pure thought, reflected in the internal organ, the conscious embodied being,§ whose presence is proved by reflection,|| assurance, and appropriation, the

* Another interpretation is "He who, oh ascetics, is described in the Śruti as dwelling amidst worldly objects and yet placed above them all."

† Nirātmā is here explained as *mano-rahitaḥ*, "mindless," i. e. without the attributes of volition, assurance, &c. The Anubhūtiprakāśa seems to read *aniśātmā* (śl. 60).

‡ The Anubhūtiprakāśa reads *buddhi-pūrvam.*

§ *Kshetrajna.*

|| *Sankalpa* is usually defined as "discrimination," see Tattwa Kaumudī, p 34. ll. 11, 12; it is the faculty by which the mind pronounces determinately on an object presented confusedly by the senses—"it is thus—it is not thus." Rāmatīrtha, unless the reading be erroneous, seems to explain it as the vague undetermined cognition, corresponding to the Naiyāyik *nirvikalpakam jnānam.* Some authors (as Vijnāna Bhikshu, Sānkhya Prav. Bhāshya, p. 122, and Rāmatīrtha himself, p. 73, l. 18,) explain *sankalpa* as a moral rather than an intellectual faculty, "resolution" (*chikīrshā*). Both faculties in fact equally belong to *manas,* as it stands midway between the organs of knowledge and action.

true Prajāpati, the Universal One. By him, the intelligent, is this body made to appear intelligent, he is the mover thereof.' They said, "Oh adorable, how by such an one, abiding aloof, is this body made to appear intelligent, and how is he the mover thereof?" He answered them. (5)

"Prajāpati* verily before creation existed, the one; he joyed not; he meditated on himself and created many creatures.† He looked on them—they were as stones, mindless, lifeless, stark as stocks. Still he joyed not; he reflected, 'I will enter within to animate them.' He made himself as air, and entered within. But as one he could not: therefore he divided himself fivefold and hence is he named by five names, Prāṇa, Apāna, Samāna, Udāna, and Vyāna. That air which goes upwards is Prāṇa; that which goes downwards is Apāna; that by which these two former are served is Vyāna (or the circulating air); that which carries off to the lower bowel the grosser parts of the food, and conveys the finer to each several limb, is named the Samāna (or equalising air). The Vyāna comes after the others, and the rise of the Udāna is interposed before it.‡ That which belches forth or keeps downwards§ the food eaten or drunken, this is the Udāna. Now the Upānśu depends on the Antaryāma and the Antaryāma on the Upānśu;|| between these two the

* Prajāpati is here Hiraṇyagarbha, produced at the beginning from the Supreme Being (the Sach-chid-ānanda), when become multicolor (or "adulterate," see Dr. Hall, Refut. Hindu Philos. p. 201) by ignorance. R.

† I.e. He became multiform by pure will. R.

‡ This is to explain the original order in l. 12, which differs from that adopted in the subsequent explanation. The Vyāna is placed last in the list above, because its action is all-important for the health of the body and is best carried on when the others rest from their functions. The prāṇa and apāna are said to blow up the digestive fire, and the samāna distributes the digested juices through the limbs; the udāna is the air whose functions are swallowing and eructation; and the vyāna supports the strength and growth of the body.—The Schol. takes it as *uttaram eteshām vyānasya rūpam chāntarā.*

§ *Nigirati* is explained as *tirodadhāti*, "conceals."

|| This alludes to the grahas of the Somayāga. The so-called Upānśu and Antaryāma grahas (or vessels for holding the Soma juice) are placed on either side of the upānśusavana or stone used for bruising the soma plant.

